# संस्कृत-निबन्ध-माला

## [प्रथमो भागः]

ब्र० रामानन्द दास श्रीवैष्णव
ऋषि संस्कृत महाविद्यालय खड़खड़ी, हरिद्वार


लेखक :

**प्रो० सी० मिश्रा**

संशोधक :

**डा० श्रीकान्त पाण्डेय**
एम. ए. पी-एच. डी.


---

**भारत सरकार द्वारा उपलब्ध किये गये रियायती मूल्य के कागज पर मुद्रित**

---


प्रकाशक :

**साहित्य भण्डार**
**सुभाष बाजार**
**मेरठ-२५०००२**

□ प्रकाशक :

**श्री रतिराम शास्त्री**

अध्यक्ष :

**साहित्य भण्डार,**
**सुभाष बाजार, मेरठ–२**
**दूरभाष : ७७६५४**

© प्रकाशकाधीन

□ षष्ठ संस्करण १९७५
संशोधित एवं परिवर्द्धित
□ सप्तम संस्करण १९८०

**सरकार द्वारा निर्धारित**

□ मूल्य : ३·८५ रु० (तीन रुपये पिचासी पैसे)

□ मुद्रक :

**तरङ्ग प्रिंटिंग प्रेस**
**आजाद रोड़, मेरठ–२**

# विषयानुक्रमणिका

———

# * संस्कृत-निबन्ध-माला *

## प्रथमो भागः



## १. जननी जन्मभूमिश्च स्वर्गादपि गरीयसी

जनन्या वात्सल्यं गरियस्त्वं चानुभूतेरेव विषयः। जनन्याः स्नेहाधिक्यं, स्निग्धा दृष्टिः, गम्भीरं प्रेमलालनं च वर्णयितुं कः प्रभवति।

यदा यक्षो युधिष्ठिरं प्रश्नमपृच्छत्—"किंस्विद् गुरुतरा भूमेः?" युधिष्ठिर उदतरत्—"माता गुरुतरा भूमेः।"

जन्मभूरपि जननीव पालयति लालयति च। तस्याः प्रेम सार्वत्रिकं प्रतिदानानपेक्षं च वर्तते। मरणानन्तरमपि जन्मभूः शरणं प्रयच्छति। सा खल्वस्मभ्यमन्नं, जलं, वसु, रत्नं च ददाति अतएव साऽन्नदा, वसुन्धरा, रत्नगर्भा चेति नामभिः कीर्त्यते। यस्मिन् देशे वयं निवसामः, यत्र जन्म लब्धवन्तः, यस्य जलमन्नं चोपभुज्य वयं पुष्टा बलवन्तश्च संजातास्तस्य गरीयस्त्वं को न प्रत्येति। जन्मभूर्लोकान्पालयति, कुपुत्रानप्यंके आरोपयति देशद्रोहिभ्योऽप्याश्रयं ददाति, अलसेभ्योऽपि भोजनं प्रयच्छति, अपराधिनोऽपि रक्षति। अतएव जनाः सदा जन्मभूमिं स्मरन्ति। तद्दर्शनलालसया च भृशं तेषां चित्तं दूयते। देशभक्ताश्च स्वदेशस्य रक्षणार्थं स्वप्राणान्, धनानि, स्वजनान् च हातुं सर्वदैव सन्नद्धा लक्ष्यन्ते। बहवो देशभक्ता जन्मभूमिरक्षणार्थं स्वप्राणानपि नियच्छन्ति।

वस्तुतस्तु संसारे जननी जन्मदातृत्वेन, जन्मभूमिश्च जीवनदातृत्वेन गरीयस्यौ। उभयोर्गौरवभारं मानवो यावज्जीवं धारयति। अनयोर्ऋणभारं मनुष्यैर्मातृभक्त्या जन्मभूसेवया चावतारयितुं प्रयतितव्यम्

क्षुद्रपशुपक्षिणामपि जन्मभूमिं प्रति प्रेम परिलक्ष्यते। जन्मभूमे लालितो

गजो न तथा राजगृहे सौख्यमनुभवति यथा वनभूभागेषु । खगा अपि न तथाऽमन्दमानन्दं विन्दन्ते प्रासादपंजरे यथा वनप्रान्तस्थवृक्षाणां कुलायेषु । अचेतना अपि वृक्षा नारोहन्ति निजजन्मभूमिवियुक्ता अन्येषु प्रदेशेष्वारोपिताः ।

अथर्ववेदस्य पृथिवीसूक्तं मानवस्य जन्मभूमिं प्रति नैसर्गिकमनुरागं ललितया गिरा व्यनक्ति—"माता भूमिः पुत्रोऽहं पृथिव्याः ।"

निजजन्मभूमिं प्रति सत्योऽनुरागोऽन्यदेशान्प्रत्यप्रीतिं नोपदिशति । अयं अन्यदेशान्प्रति स्नेहस्य सीमां विस्तारयति । अस्यादर्शवाक्यन्तु "वसुधैव कुटुम्बकम् ।" अतः स्वजन्मभूमिप्रशंसाऽपि न देशभक्तिः । निजजन्मभूमिवदन्येषामपि जन्मभुवः सम्मानकरणं देशभक्तिर्नाम ।

देशभक्तस्य चित्तं न स्वर्गेऽपि तादृग् रमते यादृङ् निजजन्मवसुन्धरायाम् । तथाहि न मातृसदृशी विमाता संभाव्यते । अत एवाह—

**जननी जन्मभूमिश्च स्वर्गादपि गरीयसी ।**

## २. उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः

अथवा

## नास्त्युद्यमसमो बन्धुः

कर्मणि प्रवृत्तिर्मानवस्य स्वाभाविकी खलु । कर्मविहीनः सः क्षणमपि स्थातुं न शक्नोति । "प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्त्तते" इति सूक्त्या मानवस्य कर्मणि प्रवृत्तिः सोद्देश्या एव भवति । तस्मिन्कर्मणि सफलताधिगमाय स परिश्रमं च करोति । न परिश्रमं विना कश्चनाल्पमपि कार्यं साधयितुं क्षमः । परिश्रमहीनो हि सर्वसुखवञ्चितः, सर्वदुःखविपन्नः सर्ववैभवहीनः, सर्वक्लेशपीडितो भवति मानवः । दैवं परमं मन्यमाना मानवा मनोरथैरेवात्मानं प्रीणयन्ति, किन्तु न तेषां लक्ष्यसिद्धिर्भवति मनोरथमात्रेण । अत एवाह नीतिकार—

उद्यमेनैव सिद्धयन्ति कार्याणि न मनोरथैः।
नहि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ।।

उद्यमेन किं न साध्यते ? सर्ववशोऽध्यवसायिनः । उद्योगेनैव कर्मसु सफलतामधिगच्छन्ति प्राणिनः । कृषको यदि क्षेत्रकर्षणं बीजवपनं, जलसेकं च यथाकालं न विदधीत, दैवं परमं मन्यमानो गृहे एव तिष्ठेत् कथं तस्य धान्यप्राप्तिर्धनागमश्च स्यात् । घोरपरिश्रमेणैव क्षेत्रकर्षकाः समृद्धं धान्यं कृन्तन्ति, सम्पन्नाश्च भवन्ति । पिपीलिका अहर्निशमुद्योगमाश्रित्य ग्रीष्मे भोज्यपदार्थान् संगृह्णन्ति । पुनश्च वर्षासु सुखेन तान् भक्षयन्ति । उद्यमहीनाः प्राणिनस्तु एवंविधे संकटकाले क्षुधापीडिता जीवनं त्यजन्ति । उद्योगशीलाश्छात्राः परीक्षोदधिमुत्तीर्य मोदन्ते । इतरे तु गृहकोणे निपत्य दैवमुपलभमाना अश्रूणि विमुञ्चन्ति ।

दुष्करं नास्ति किञ्चिद् यत्परिश्रमेण न साध्यते । यस्याङ्गे ऽध्यवसायः समुन्मीलति तस्य वह्निर्जलायते, जलनिधिः कुल्यायते, मेरुः स्वल्पशिलायते, मृगपतिः सद्यः कुरङ्गायते, व्यालो माल्यगुणायते, विषरसः पीयूषवर्षायते । किं बहुना उद्योगिनो दैवं परिवर्त्तयन्ति । न किमप्यशक्यं नाम उद्योगिनाम् । "असम्भवम्" इति शब्दः केवलमकिञ्चनकराणामेव शब्दकोषे स्थानं लभते नोद्योगिनां पुरुषाणाम् । ये पुनः कातराः सन्ति, तेषां सर्वाः सिद्धयो नश्यन्ति । कौलीनां लक्ष्मीमपि ते न प्राप्नुवन्ति, जनेषु तिरस्कारं विद्वत्सु चापमानं लभन्ते ।

महामहिममण्डिता महापुरुषा उपरता अपि यशसा भुवि विराजन्ते, तेषां जीवनमस्य साक्ष्यं यत्पौरुषमेव मानवप्रगतेर्निदानम् । रामकृष्णमहावीरबुद्धाशोकशंकरदयानन्दगान्धिनेहरुपटेलादयोऽध्यवसायस्य साहाय्येन लोकोत्तराणि कार्याणि कृत्वा स्वं स्वं जीवनं सफलयामासुः । तेषामादर्शचरितानि स्मारं स्मारं जना अद्यापि प्रेरणां लभन्ते ।

अथ किं नाम दैवम् ? पुरा यानि कर्माणि अस्माभिरनुष्ठितानि तेषां परिणतिमेव नीतिविदो दैवमित्याचक्षते । वस्तुत एवं दैवमपि पौरुषेणैव फलति ।

दैवं पौरुषं च खलु साफल्यरथस्य चक्रद्वयम् द्वयोरेव चक्रयोः साहाय्येन साफल्यं लभन्ते मानवाः । अत एवोक्तं केनापि नीतिविशारदेन—

यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् ।
तथा पुरुषकारेण बिना दैवं न सिद्ध्यति ।।

अतश्च पौरुषस्यावलम्बनमेव भाग्यस्य वास्तविकाऽऽराधना । पौरुषाश्रयं विना भाग्याराधनस्य न किमपि फलम् ।

अलमतिविस्तरेण—

नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ।।

इति श्रीभगवद्गीताया वाक्यमङ्गीकृत्य उद्यमो विधेयः । केवलं स्वप्नलब्धैर्मोदकैर्ग्रामस्योपनिमन्त्रणं न शोभनम् ।

## ३. यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः

पुरा नार्यः पुरुषतुल्यमधिकारान् लेभिरे । जनाचारेषु ते पुरुषाणां साहाय्यकारिण्यः सहधर्मिण्यश्चासन् । सीताया निर्वासनोत्तरं रामेण प्रारब्धोऽश्वमेधनामा यज्ञो यज्ञमण्डपे सीतायाः सौवर्ण्याः प्रतिमायाः प्रतिष्ठानानन्तरमेव सम्पन्नोऽभवत् । राजसभासु विद्वत्समाजेषु च नार्यो वादप्रतिवादे पुरुषानखण्डयन् । उपनिषत्सु गार्ग्या उल्लेखनमस्ति । यया जनकस्य सभायां विद्वद्भिः समक्षं वादानुवादे याज्ञवल्क्यः पराभूतः । स एतादृशो युग आसीद् यदा न केवलं विद्याक्षेत्रे किन्तु रणक्षेत्रेऽपि योषितः पुरुषाणां सहायिका अभवन् । कैकेयी द्वौ वरौ युद्धक्षेत्रे एव लेभे । दुर्गाऽपि 'यो मां युद्धे जेष्यति स एव मां वरिष्यति' इत्थं प्रतिज्ञां कृत्वा अनेकान् राक्षसानहन् । तदानीं स्वयंवरस्यापि प्रथा प्रचलिता आसीत् । वनिता निजव्यक्तित्वविभूषिता आसन् । ताः पुरुषाणामधीनता प्रेमातिरेकभावनया, प्राणोत्सर्गभावनया च प्रेरिता एवाङ्गी कुर्वन्ति स्म । किरातार्जुनीयमहाकाव्यमस्य निदर्शनम्, यद् योषितो निजभर्तारमपि उपदिशन्ति स्म ।

द्रौपद्या उपदेशेन समुत्तेजिता एव पाण्डवाः कौरवैः सार्धमयुध्यन्त। गणितस्याध्येत्रीं लीलावतीमपि को न जानाति। मन्त्रदर्शनमपि नारीणां कार्यक्षेत्रमासीत् इति कतिपयवैदिकर्षयोलोपामुद्राविश्ववारादयो नार्योऽत्र प्रमाणम्।

नहि समयः सर्वदा समानरस एव सञ्चरति। योषितां पूर्वोन्नतावस्था पतनोन्मुखी सञ्जाता। सेवाभावनया प्रेरिता नार्यो गृहव्यापारस्य भारं सहर्षं स्वीचक्रुः, किन्तु तासां गृहलक्ष्मीणां सेवाभावं तिरस्कृत्य पुरुषैस्ता गृहेष्वेव निरुद्धाः। 'अबला' 'आश्रिता' इत्यादिभिः शब्दैश्च आहूताः। 'लज्जा योषितां भूषणम्' इत्यस्य मोहकमंत्रस्य तानं श्रावं श्रावं गृहेष्ववरुद्धा अपि ताः सन्तुष्टा अभवन्।

रामायणकालोत्तरं क्रमशः एतादृशी अवस्थाऽजायत 'न स्त्री शुद्रावधीयताम्' इति चोद्घोषणा सञ्जाता। नार्य अधोगतेः प्रथमः संकेतो महाभारते लक्ष्यते। तदनन्तरं च पुराणयुगे नारीणामनादरः सार्वत्रिकत्वमभजत। समाजे च ता हीनदृष्ट्याऽवलोक्यन्ते तासामधिकारा विलुप्ताः स्वातन्त्र्यं च विनष्टनम्।

**पिता रक्षति कौमारे भर्ता रक्षति यौवने।**
**पुत्रो रक्षति वार्द्धक्ये न स्त्री स्वातन्त्र्यमर्हति॥**

इत्यादिभिर्वज्रपातसदृशैर्नियमैस्तासामधिकारेषु शाश्वतकालाय मुद्रा-दापिता। अवगुण्ठनप्रथायाः प्रारम्भोऽस्मिन्नेव युगे सञ्जातः। अन्या अपि कुप्रथाः सतीप्रथादयोऽस्मिन्नेव काले जन्म लेभिरे। नारीजातेः कठोरबंधनम् 'असूर्यपश्या राजदाराः' इत्यादिभिः प्रयोगैरनुमातुं शक्यते।

एवं मध्ययुगे विशेषतो नारीणां दुर्दशाऽभवत्। फलतश्च समाजस्याप्यधोगतिः संजाता। यतो हि सुशिक्षिता नार्य एव सुसंस्कृतसंततीरुत्पादयितुं प्रभवन्ति। इत्थं नारीणां दुरवस्थायाः प्रभावोऽन्ततो मानवसमाजेऽप्यपतत्। फलतश्च भारतं चिराय परतन्त्रं, दुरवस्थापन्नं, दीनहीनं चाभवत्।

वस्तुतस्तु समाजस्योन्नतिर्नारीजगतः समादरकरणे निर्भरा।

नारीपूजायास्तात्पर्यं ताभ्योऽधिकारप्रदानं तासां शिक्षास्वातन्त्र्यं सामाजिकस्वतन्त्रता चास्ति। शिक्षिता नार्य एव मानवसमाजं सुसंस्कृतं कर्तुं क्षमाः। यतो हि नार्य एव सन्ततेः प्रथमगुरवः। नारी शिक्षायाः प्रसार एव वास्तविकः शिक्षाप्रसारः तेनैव च समाजस्य बहुमुखी प्रगतिः संभवितुमर्हति।

समाजस्य प्रगतिर्नारीप्रगतिमावृत्यैव संभवति। यतो नरश्च नारी चेति जीवनरथस्य द्वे चक्रे। यथा नैकं चक्रः रथस्य कारणं तथैव केवलेन नरेण केवलया वा नार्या न जीवनं कथमपि संभवति। जीवनस्य पथि साफल्याधिगमाय द्वयोरपि चक्रयोः स्वस्थत्वं द्रढिमा चापेक्ष्यते। यद्येकं चक्रं स्खलितप्रायं भग्नं वा स्यान्न तदा रथस्य प्रगतिर्भवेत् एवं समाजेऽपि नरनार्योर्द्वयोरपि समत्वं समस्थितित्वं चानिवार्यं संजायते।

इत्थं नारीपूजा महिलाजनसमादरः समाजस्य श्रेयसे, तस्या अवहेलना च राष्ट्रस्य विधाताय। यदायदा नारीजातिरवहेलिता, राष्ट्रस्य पतनं परिणामोऽभवत्। नारीसम्मानस्तत्रैव सर्वदैव सर्वत्र राष्ट्रोन्नतेः पथप्रदर्शकोऽभूत्। यत्र नारीजातेः सम्मानस्तत्रैव सार्वत्रिकं सुखमखण्डा च शान्तिः संभाव्यत इति सत्यमुक्तं मनुना—

यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः।
यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राऽफलाः क्रियाः॥

## ४. परोपकाराय सतां विभूतयः

सज्जनानामिह भूतले आगमनं परोपकारायैव भवति। नहि सामान्यजनानामिव तेषां जीवनस्य लक्ष्यं स्वार्थसाधनम्। अद्यत्वे सर्वत्रैव स्वार्थान्धकारस्य साम्राज्यम्। सन्त एव परोपकारप्रकाशेन तद् दूरीकृत्य संसारमानन्दयन्ति। यदि सन्तः स्वजन्मना इमां पृथ्वीं न पावयेयुस्तदा इयं पृथ्वी नरकतुल्या भवेत्।

दुर्लभाः खलु सन्तस्तेषां निकषोऽपि कठिनः कवेर्भर्तृहरेः शब्देषु—

मनसि वचसि काये पुण्यपीयूषपूर्णा—
स्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः ।
परगुणपरमाणून्पर्वतीकृत्य नित्यं,
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥

येषां जन्म जगतः कल्याणकामनायैव भवति, जीवनं परोपकरणाय संजायते, गतिविधिश्च विश्वकल्याणाय कल्पते ते एव सज्जनाः भर्तृहरिरप्याह—

भवन्ति नम्रास्तरवः फलोद्गमैः,
नवाम्बुभिर्भूमिविलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः,
स्वभाव एवैष परोपकारिणाम् ॥

महापुरुषः खलु प्रच्छायतरुरिव भवति य—
सहति च किल मूर्ध्ना पादपस्तीव्रमुष्णं ।
शमयति परितापं छायया सश्रितानाम् ॥

अस्मिञ्जगति एके तावत्ते सन्ति ये निजस्वार्थसिद्धिं विनाऽपि परक्षतये चेष्टन्ते, अन्ये तु स्वार्थसिद्धिं विनापि परक्षतये चेष्टन्ते, इतरे तु स्वार्थसिद्धये परेषां हानिं विदधति, परमपरे निजहानिमगणयन्तः परानुपकुर्वन्ति । भर्तृहरिरप्याह—

एते सत्पुरुषाः परार्थघटकाः स्वार्थान्परित्यज्य ये,
सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये ।
तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये,
ये निघ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥

"उदारचरितानां तु वसुधैव कुटुम्बकम्" इत्यस्यादर्शमन्त्रस्य जपपरायणा महात्मानः । परोपकारे रतानां सज्जनानां मनांसि न तथा निजदुःखेषु द्रवन्ति यथा परविपत्तिषु । संसारस्योपकरणं तेषां जीवनस्य चरमं लक्ष्यमस्ति । यत्रैवार्ता विपन्ना वा तेषां साहाय्यमपेक्षन्ते ते क्षणेन तत्रोपस्थिता भवन्ति । तत्र गत्वा क्लेशप्रतीकारं विदधते तेषामुपकारो

नात्मप्रदर्शनाय, न ख्याति—प्राप्तये नाधिकारलिप्सया वा। येषां दानं व्यापारवृद्धयाशया परोपकरणं च यशोऽवाप्तये उच्चपदप्राप्तये च ते न सज्जनाः अस्माकं बहुलेषु नेतृषु एतादृशी प्रवृत्तिर्दृश्यते।

सज्जनानां विभूतिः प्रणिमात्राय भवति। समाजं, राष्ट्रं, संसारञ्च सकलमेतादृशा एव महापुरुषाः प्रीणयन्ति। एतादृशां जीवनादर्शो न केवलं वर्त्तमानस्य किन्तु भविष्यकालस्यापि मार्गसूचनायाऽलम्। वस्तुत एतादृशः सन्तः कस्यचित्समाजविशेषस्यं राष्ट्रविशेषस्य वा सम्पत्तियो न भवन्ति। महात्मनो गान्धिनो जीवनमस्यैव निदर्शनम्। नहि स भारतस्य विभूतिरपितु समस्तस्य विश्वस्य। युगानि चास्य जीवनं विश्वस्मै जगते मार्गं प्रदर्शयिष्यति। भौतिकशरीराभावेऽपि स महात्मा यशःशरीरस्य माध्यमेन शाश्वतकालाय निजादर्शैः ससारं प्रेरयिष्यति। वस्तुतस्तु महात्मनां जीवनं परोपकारायैव भवति। अत एवोक्तम्—'परोपकाराय सतां विभूतयः।'

## ५. तीर्थयात्रावर्णनम्

तीर्थमहात्म्यश्रवणेनैव मानवः पुण्यं लभन्ते, यात्रया तु शतगुणमधिकं सुकृतमाप्नुवन्तीत्यास्था धर्मनिष्ठानां भारतीयानां खलु। तत्त्वतस्तीर्थस्य पवित्रेण, पूतेन, सुरम्येण च वातावरणेन कस्य हृदयं न विशुध्यति। तस्य दर्शनमात्रेणैव शरीरस्य क्लान्तिर्विनश्यति चित्तं च प्रसीदति। विशुद्धे मनसि सर्वाणीन्द्रियाणि शुभकृत्येषु प्रवर्तन्ते। एव सिध्यति यत्पुण्यस्थाने धर्मभावेन सम्पन्नयात्रापूजास्नानप्रभृतयः पुण्या-वहा भवन्ति। तीर्थेषु वाराणसी मह्यमधिकं रोचते। यतो नारदपुराणमपि वाराणसीमित्थं श्लाघते—

वाराणसी तु भुवनत्रयसारभूता,
रम्या नृणां सुगदिता किल सेव्यमाना।
अत्रागता विविधदुष्कृतकारिणोऽपि।
पापक्षये विरजसः सुमनः प्रकाशाः॥

ऐतिहासिकदृष्ट्याऽपि काशी संसारस्य प्राचीनतमा नगरी वर्तते। वेदेष्वप्यस्या उल्लेखो विद्यते—"आप इव काशिना संगृहीताः। (ऋक् ७/१०४/८) मघवन्, काशिरित्ते (ऋ० ३/३०/५) यज्ञः काशीनां भरत सात्वतामिव (शतप० ब्रा० १५/५/६, ११)।

पुराणानुसारमिदमाद्यवैष्णवस्थानमास्ते। अहर्निशं काशीमाहात्म्यमनुचिन्तयता मया तत्र गमनाय मतिर्दृढीकृता।

ग्रीष्मावकाशे पथिकपरिच्छदेन सार्धमहं मयनगरस्य वाष्पयानस्थानमगच्छम्। तत्र निदर्शनपत्रगृहादभिज्ञानपत्रं नीत्वाऽहमन्तः प्रविष्टः। तत्रत्यं जनसंमर्दमवलोक्य प्रथममहं हतोत्साहोऽभवम्। परं सहसा सहाध्यायिनां साहाय्येन किंचिद्धैर्यमलम्बे। समागते वाष्पयाने जना अहमहमिकया स्थानप्राप्त्यर्थमधावन्। वयमप्येकस्मिन्कक्षेऽन्योन्यं समाघात कुर्वन्तोऽन्तः प्रविष्टाः। सौभाग्येन तत्रयाने सम्मर्दो नासीत्। यात्रिक सामग्रीमितस्ततो निधाय वयं यदा वाष्पयन्त्रं प्रस्थानमकरोत्तदाऽह बहि प्राकृतिकदृश्यानिनिरीक्षमाणः परमां विरक्तिमाप्नुवम्। नयनाभिरामास्त रुगुल्मलताश्चेतस्ततोधावमाना जगतोऽस्थिरतां सूचयन्ति। विहगकलर कूजिता तरुराजिप्रच्छन्नप्रेरणां करोति यदयं संसारोऽनित्यः। वनोपवना कम्पमानो हरिततृणावृतो भूमिभागः शिशिरं प्रति संकेतयति। भाव विस्मृतोऽहं सहसाऽसहृदयैः स्वमित्रैर्विक्षुब्धः तैस्तु गायनेन हास्येनातिकथ च परिहासं कुर्वन्तो बलान्मां मायावशं कर्तुं विचेष्टन्ते। मया स्व विचारितं यदेते वराका न जानन्ति यत्तीर्थयात्रा नहि मनोविनोदा पर्यटनाय, खाद्यद्रव्यनाशाय। तीर्थयात्रा परमार्थसाधनार्थं, चित्तशुद्ध्य मिन्द्रिनिग्रहार्थञ्च खलु। भौतिकवादस्य नास्त्यत्रावकाशः आध्यात्मि तामाश्रित्य तीर्थसेवनेनैव लक्ष्यसिद्धिर्जायते। अत्रान्तरे इन्द्रप्रस्थना वाष्पयानस्थानं समयातम्। वाष्पयानस्य सञ्चालकस्तत्र वाष्पयानमस्त यत्। घोषणापूर्वं तुच्छद्रव्यविक्रेतृणा शब्दैस्तत्रत्यं सर्वं वायुमण्डलं प्रति नितमभवत्। पुनरेकवारं बालवृद्धवनिताश्चाप्यायातेन बहिष्कृत्य स्वनय प्रविशन्तं तं जनसमूहमवलोक्य मया स्वगतं चिन्तितं यदेते स्वार्थान्ध

कोदृशाः कठोरहृदयाः। नूनं स्वार्थलिप्सा मानवं विवेकशून्यं करोति। प्रकाशचिह्नस्य पतनेन सार्धमेव वाष्पसंचालितस्य यन्त्रस्य संरक्षकेण ध्वनिनालेन शीशशब्दं कृतम्। वाष्पीययंत्रस्य चालकेनापि तदनुकृतम्। द्वितीयशीशूशब्दान्तरं वाष्पयन्त्रं शनैः शनैः प्राचलत्। आज्ञासूचकचिह्नस्यातिक्रमणं कृत्वा वाष्पीययन्त्रं त्वरितगति खलु सञ्जातम्। प्रत्यासन्ने निशीथे सर्वे यात्रिका निद्रातुराः सञ्जाताः। निद्रां गतास्तेजानुषु शिरांसि निधाय सुषुप्ताः। धृष्टा यात्रिणस्तु आस्तरणानि प्रसार्य परमानन्देन गतक्लमाः शेरते स्म। एवं प्रमुखवाष्पयानस्थानेषु विरममाणं वाष्पयानं वाराणस्या वाष्पयानस्थानमधिगत्यव्यष्टभत्। स्तम्भिते वाष्पयाने भारवाहानाहूय तेषां शिरः सुयात्रिकसामग्रीं निधाय निदर्शनपत्रं दत्वा वयं संक्रममारोहम्। वहिर्गत्वा वाहनान्यारुह्य लच्छीरामस्य धर्मशालां सम्प्राप्नुम। पथिक परिच्छदानि तत्र निधाय वयं स्नानार्थं भागीरथीमुद्दिश्यागच्छाम।

वाराणस्या घट्टेषु पञ्च घट्टाः प्रमुखाः सन्ति। वरणासंगमघट्टः, पञ्चगंगाघट्टः मणिकर्णिकाघट्टः, असीसंगमघट्टः। मणिकर्णिकाघट्टो वीरतीर्थं इति नाम्नापि कीर्त्यते। अत्र मणिकाकुण्डोऽप्यास्ते। यस्य परितः सोपानानि विद्यन्ते। अस्य कुण्डस्य तले भैरवकुण्डो वर्तते। अस्य कुण्डस्य पानीयं सप्ताहान्त एकवारं वहिर्निःसारयन्ति। एकस्माच्छिद्रात्स्फटिकवच्छेतं जलधारा निःसरति। यया कुण्डः परिपूर्णो भवति। अपूर्वपुण्यलाभायाऽत्र स्नात्वा वयं घट्टानां नगरस्य चाप्रतिमां शोभां निरीक्षमाणाः श्रीविश्वनाथमन्दिरस्य पार्श्वं समागताः। इदं मन्दिरम् स्वर्णकलशेन सुशोभितं वर्तते। अयं कलशः पञ्चनदकेसरिणा रणजीतसिंहेन समर्पितः। अस्य सम्मुखीन एकः सभामण्डपस्तस्य प्रत्यक् च दण्डपाणीश्वरमन्दिरम्। सभामण्डपे एका पृथुपरिमाणा घण्टा, अनेका देवप्रतिमाश्च खलु। मन्दिरस्य प्राङ्गणे एकपार्श्वे सौभाग्यगौर्यालम्बोदरस्य च मन्दिरे, द्वितीयपार्श्वे शृङ्गारगौर्या अविमुक्तेश्वरस्य, सत्यनारायणस्य च मन्दिराणि। दण्डपणीश्वरमन्दिरस्य प्रत्यक् च शनैश्चरो महादेवः सुशोभते। अस्य रूप्यनिर्मितं मुखमात्रमस्ति नहि शरीरम्। अस्यैकपार्श्वे मारुतिः, द्वितीयपार्श्वे

च वटवृक्षः । अक्षयवट इत्यस्यापरं नाम । अत्र द्रुपदादित्यनकुलेश्वरौ महादेवौ विराजेते ।

विश्वनाथमन्दिरं निकषाऽन्नपूर्णाया मन्दिरमास्ते । रूप्यनिर्मितसिंहासनस्योपरि अन्नपूर्णाया पित्तलमयी प्रतिमाविराजते । मन्दिरस्य सभामण्डपस्य पूर्वतः कुवेरस्य, सूर्यस्य, विनाकस्य, विष्णोः, मारुतेश्च प्रतिमा विद्यन्ते । श्रीभास्कररायेण निर्मित—यन्त्रेश्वरलिङ्गमप्यत्र गोचरीभवति । यस्योपरि श्रीयन्त्रमिति लिखितमस्ति । उपयुक्ता देवता प्रतिमा विधिवदभ्यर्च्य वयमन्नपूर्णामन्दिरस्य द्वितीयखण्डे प्रविशाम अस्य प्राङ्गणं विस्तृतं खलु । तत्र महाकाल्याः शिवपरिवारस्य, गङ्गावतरणस्य, लक्ष्मीनारायणयोः श्रीरामस्य राजसभायाः राधाकृष्णयोः, उमामहेश्वरयोः नृसिंहस्य च मार्वलाख्यनानावर्णप्रस्तरमय्या रमणीयाः प्रतिमा विराजन्ते । अस्य मन्दिरस्य कियद्दूरं प्रत्यागत्य वयं ढुण्ढिराजगणेशस्य साक्षात्कारेण-कृतकृत्या अभवाम । अस्य सर्वं शरीरं रजतखचितमस्ति ।

श्रीविश्वनाथमन्दिरं समया ज्ञानवापीकूपोऽस्ति । तत्रावारङ्गजीवेन प्राचीन शिवमन्दिर भूमिसात्कृत्वा निर्मित यावनधर्ममन्दिरं गोचरी भवति । मया स्वगतं चिन्तित यद् यवनानां धर्मिकासहिष्णुताया एतदविस्मरणीयं निदर्शनम् ।

वस्तुतस्तु वाराणसी मन्दिराणां नगरी खलु । यतः पदे पदेऽत्र देवालया विराजन्ते । तेषामभिधानोल्लेखनमप्यत्र दुष्करम् ।

जनतीर्था अप्यत्र दर्शनीयाः । तेषां साक्षात्कार कृत्वा वयं हिन्दुविश्वविद्यालयमुद्दिश्यागच्छाम । इयं नहि केवल वाराणस्या अपि तु भरतस्य प्रमुखा शिक्षासंस्था खलु । भारतमाता इति नाम्ना प्रख्यात मन्दिरमप्यस्माभिरवलोकितम् । अत्र चारुप्रस्तरे भारतवर्षस्य चित्रमतिसुन्दररीत्या चित्रितं खलु । काशीविद्यापीठ क्वीन्सकालिजसरस्वतीभवनकाशीनागरीप्रचारिणीसभाप्रभृतीन् शिक्षाकेन्द्रानवलोक्य वयं सारनाथेति नाम्ना प्रसिद्ध बौद्धानां प्रधानं तीर्थपदं प्रति प्राचलाम, भगवान् बुद्धो-निजसिद्धान्तानां प्रचारमित एव प्रारभत । तत्राशोकस्य चतुर्मुखं सिंह-

स्तम्भं, भगवतो बुद्धस्य मन्दिरं, धमेखस्तूपं, चौखण्डीस्तूपं, सारनाथस्य वस्तुसंग्रहालयं, जैनमन्दिरं, मूलगन्धकुटीं नवीनविहारं चावलोक्य वयं परमां सन्तुष्टिमभजामहि ।

वस्तुतस्तु वाराणसी भारतस्य प्राचीनतमं विद्याकेन्द्रं सांस्कृतिक-मुख्यस्थानं चास्ते । साम्प्रदायिकता प्रान्तीयता चेमां पूतां नगरीं न दूषयतः । सर्वतोभावेन जनानां तारणात् तीर्थपदेनेयं व्यपदिश्यते । अतस्तीर्थयात्रानन्तरं मम हृदयेऽयं विचारः समुद्भूतः 'कथन्तु वाराणसी स्वकीयं प्राचीनं गौरवं लभते ।'

## ६. दीपावली

दीपावली महोत्सवस्य महिमा सर्वेभ्यो भारतीयसांस्कृतिकसमारोहेभ्योऽतिशेते । प्रत्येको भारतीयः शाश्वत्कालादेव ऐश्वर्यदायिनीं वरदां लक्ष्मीमर्चति । इयं लक्ष्मीपूजाऽस्माकं राष्ट्रियव्यवसायस्य भौतिकोद्योगस्य च महच्चिह्नम् । अयं समारोहो यत्राध्यात्मिकतामाश्रयते तत्र भौतिकत्वमप्यवलम्बते । हरिप्रियाया अनुग्रहं बिना नाध्यात्मिकताक्षेत्रे न भौतिकत्वक्षेत्रे कोऽपि जीवधारी प्रगतिं कर्त्तुं प्रभवति । अद्यतने युगेऽर्थस्य महत्वं सर्वविदितमेव । अतोऽद्यत्वे लक्ष्मीपूजाया महिमाऽपि सर्वोत्कृष्टा वर्त्तते । अस्मिन्पर्वदिवसे लक्ष्मीपूजा द्वारा जना निज जीवनस्थितिमुच्चतरां कर्तुं प्रयतन्ते । वणिग्जना व्यापारे चरमामुन्नतिमधिगन्तुं लक्ष्म्या अर्चनं कुर्वन्ति । आध्यात्मिकताया भौतिकत्वस्य च समन्वय एव भारतीयसंस्कृतेः सर्वाधिकं वैशिष्ट्यं खलु । अनेन हेतुना दीपपर्व भारतीयसंस्कृतेर्वैशिष्ट्यमेव प्रकटयति । राष्ट्रीयसांस्कृतिकैतिहासिकदृष्ट्याऽस्य पर्वणः स्वरूपं क्षेमकरमास्ते । इयमेवास्य पर्वणो महनीयता ।

इदं पर्व रामस्यायोध्यऽऽगमनमप्युपलक्ष्य सम्पन्नं भवति ।

दीपावल्याः कतिपयदिवसपूर्वमेव जना नगराणि ग्रामांश्च ससमारोहं संस्कुर्वन्ति । गृहाणि शुचीकुर्वन्ति, सुधया धवलीकुर्वन्ति, भूषयन्ति च ।

मनोहरैश्चित्रैरन्यैश्च प्रसाधनसाधनैः गृहकुड्यान्यलंकुर्वन्ति च । एवं सदनानि सर्वतो मनोहारीणि मनोज्ञानि च संजायन्ते । दीपपर्वदिवसे प्रसन्नाननाः पुरुषा महिला बाला युवकाश्च सुवासांसि धारयित्वा पण्य-वीथिकासु लक्ष्मीपूजाया उपकरणक्रयणार्थं विक्रयशालामभिगच्छन्ति । सर्वत्रापूर्व उत्साहः प्रकटीभवति । रात्रौ जना निजभवनान्यापणान् च दीपमालिकया विद्योतयन्ति, अमावस्यायास्तमिस्रे दीपानां पंक्तयोऽपूर्वां कामपि शोभां दधते । नगराणि च विद्युतोऽतिशयतेजसा देदीप्यन्ते ।

दीपमालिकाया अप्रतिमं सौन्दर्यं तु कस्यापि नगरोपान्तसरोवरस्य तटे सरसोऽम्भसि विद्युच्छटानां प्रतिबिम्बमवलोक्यैवानुभवितुं शक्यते । अस्यामनुपमदीपज्योत्स्नायामाग्निकर्मकेलयोऽपि (Fire Works) न न्यूनां सौन्दर्यानुभूतिं जनयन्ति ।

अस्यामेव प्रदोषवेलायां केचिदैश्वर्याधिपत्नीं लक्ष्मीं पूजयन्ति, आगामि वत्सराय च सुखं सम्पत्तिं च प्रार्थयन्ते । वैश्या व्यापारिणश्चास्मिन्पर्वणि विशेषरूपेण भागं गृह्णन्त्यत एव चेदं पर्ववैश्यपर्वेत्यभिधीयते ।

केचन धनलोलुपाः पुरुषा अस्मिन्नवसरेऽक्षादिक्रीडया लक्ष्मीमधि गन्तुं प्रयतन्ते । इयमक्षपरता दीपपर्वणः पवित्रतायां महान्कलङ्कोऽतश्च नियम्या खल्वियं कुप्रथा । ऋग्वेदस्याक्षसूक्तमपि द्यूतक्रीडामित्थं गर्हति—

**अक्षास इदङ्कुशिनो नितोदिनो,**<br>
**निकृत्वानस्तपनास्तापयिष्णवः ।**<br>
**कुमारदेष्णा जयतः पुनर्हणो,**<br>
**मध्वा संपृक्ताः कितवस्य बर्हणा ॥** ७

## ७. विजयदशमी

विजयदशमी हिन्दूनां महासमारोहदिवसो वर्तते । सर्वत्रापि भारत-देशेऽयं महोत्सवो रावणोपरि रामस्य महाविजयमुपलक्ष्य सम्पन्नो भवति ।

श्रीरामोऽयोध्याधिपतेर्दशरथस्य ज्येष्ठपुत्र आसीत् । विमात्रा कैकय्या

स चतुर्दशवर्षेभ्यो राज्यान्निर्वासितः। वनाद्वनान्तरं पर्यटन् स राक्षसानवधीत्। भगिन्याः शूर्पणखाया नासिकाच्छेदेन कुपितो रावणस्तस्य पत्नीं सीतामपजहार। रामो वानराधिपतेः सुग्रीवस्य साहाय्येन रावणं पराजित्य सीतां पुनः प्राप। विजयदशमी इयमेव रामस्य विजयं लक्ष्यंकरोति। एतस्यामेव तिथौ रामौ रावणं हत्वा विजयश्रियमवृत।

इदं पर्व विभिन्नप्रान्तेषु विविधरूपेण सम्पद्यते। प्रायेणायमुत्सवोदशदिवसान् यावद् अनवच्छिन्नं प्रवर्तते। पण्डिता रामायणकथां वितन्वते श्रोतारश्च श्रद्धान्वितास्तां शृण्वन्ति। प्रतिनगरं प्रतिग्रामं च रामलीलाया अभिनयो भवति। यं जनसमूहः सोल्लासं पश्यति। रामलीलादिवसेषु नगरेषु ग्रामेषु वा महती प्रवृत्तिरवलोक्यते। प्रतोलिकायामापणे च बालका एषु दिवसेषु रामलक्ष्मणपरशुरामादीनामनुरागजनकमभिनयं कुर्वन्तो दृश्यन्ते।

विजयदशम्यां सर्वत्र ग्रामेषु नगरेषु चोपान्तभागेषु महान् समारोहो भवति। नरा नार्यो युवका बालाश्च नियतस्थाने सूर्यास्तमयाद् द्वित्रिघटिकापूर्वमेकत्रभवन्ति। सर्वत्रैव महान् जनसागर उद्वेलित इव प्रतीयते। सकलोऽपि भूमिभागोऽपूर्वया प्राणशक्त्या संचारित इव भवति। हास्यविनोदयोः प्रस्रावाः सर्वत्र प्रवहन्ति। रावणकुम्भकर्णमेघनादादीनां वंशखण्डनिर्मितानि वृहदाकाराणि प्रतिरूपाणि तत्रोपस्थाप्यन्ते। सूर्यास्तमनवेलायां विविधान्यग्निकर्माणि प्रदर्शयन्ते रावणदीनां प्रतिरूपाणि अग्निसात्क्रियन्ते। ततश्च जनसंमर्दः स्वं स्वं गृहं प्रतिनिवर्तते। इत्थं दशदिवसाधिकः समारोहः सानन्दं समाप्तिं गच्छति।

विजयदशम्या उत्सवो हिन्दूनां कृते धार्मिकदृष्टदृष्टचा महत्त्वपूर्णोऽस्ति। आर्याणामनार्योपरि विजयस्येदं प्रतीकम्।

## ८. सत्सङ्गतिः कथय किं न करोति पुंसाम् ?

संसारेऽस्मिन्न कोऽपि चरोऽचरो वा संसर्गं विना स्थातुं पारयति। अचेतना अपि तरुलतावीरुधादयः संगेनैव जीवन्ति, समृद्धिं च लभन्ते।

वनलता निकटस्थं वृक्षमाश्रयति । वनमृगो मृगं विना जीवितं धारयितुं न प्रभवति चक्रवाकः कोकीं बिना रजन्यां चित्तवैकल्यमनुभवति । स्नेहपाशानुप्राणितो मानवस्तु संगं बिना कदापि प्राणान् धारयितुं न शक्नोति । यत्र कुत्रापि स आत्मानं प्रवर्तयते ।

मनुष्यो हि सामाजिकः प्राणी खलु । यस्मिन् समाजे स श्वसिति वर्धते य तस्य समाजस्य तदुपरि प्रभावोऽक्षुण्ण एव । मनुष्यस्य यादृशी संगतिस्तादृश्येव तस्य प्रकृतिः संजायते । यदि तस्य सहवासिनः । सज्जनास्तर्हि सोऽपि सज्जनः स्यात् । यदि ते दुष्टास्तर्हि सोऽपि दुष्ट एव । दोषगुणाः संसर्गजा एव भवन्ति । यथा वृक्षस्तस्य पर्णैरनुमीयते तथैव मनुष्यस्तस्य सहचरैर्ज्ञायते । एवं संगस्य महत्वं सर्वविदितमेव । अत एव संगत्या माहात्म्यमुपवर्णयन्कश्चित्कविराह—

**अहं मुनीनां वचनं शृणोमि शृणोति चासौ यवनस्य वाक्यम् ।**
**न तस्य दोषो न च मे गुणोऽयं संसर्गजा दोषगुणा भवन्ति ।।**

एवं च द्विविधा संगतिः खलु । दुर्जनानां संगतिः कुसंगतिः, सज्जनानां संगति सत्संगतिः । यथा सत्संगतिः स्वप्रभावं करोति तथैव कुसङ्गतिरपि । दुष्टानां संगेन तु मानवस्य पतनं शीघ्रमेव भवति । यतो हि मानवस्येयं प्रकृतिर्यत्स कुकृत्येषु सत्वरं प्रवर्तते, सुकृत्येषु तस्य प्रवृत्तिः प्रयत्नसाध्या खलु । किन्न दृष्टं यस्मिन् प्रदेशे पानीयमनायासेनैवैकत्रभवति परमुन्नतस्थाने तु तस्य नयनं प्रयत्नसाध्यमेव । अतएव ज्ञायते बलवती कुसंगतिस्त्वरितमेवाच्छादयन्ति दोषाः । दुर्जनो गुणसम्पन्नोऽपि परिहर्त्तव्य एव यतः स परिणामे नूनं भयावहः—

**दुर्जनः परिहर्त्तव्यः विद्ययाऽलंकृतोऽपि सन् ।**
**मणिना भूषितः सर्पः किमसौ न भयंकरः ।।**

सद्भिः सह विचरन्नपि मानवो यदि कुसंगतिं न त्यजेत्तदा न कोऽपि लाभः सत्संगत्याः ।

सत्संगतेः प्रभवो महान्खलु । नीचा अपि साधुतां यान्ति, अधोगता अप्युन्नतिशिखिरमारोहन्ति । दोषा विनश्यन्ति, शीलं सदाचारश्च विकसतः । सतां संगेन पापिष्ठोऽपि पुण्यात्मा, दुर्वृत्तोऽपि सज्जनो, निरक्षरो-

ऽपि साक्षरः सम्पद्यते । चन्दनवृक्षस्य संसर्गान्निम्बपादपोऽपि चन्दनायते । रत्नानामाकरे पतिताः प्रस्तरा अपि रत्नानि भवन्ति पिपीलिका अपि कुसुमानां साहचर्येण शम्भोर्जटाजूटतटाधिरूढां चन्द्रबिम्बं चुम्बति काचः कांचनसंसर्गान्मारकतीं द्युतिं धत्ते । किम्बहुना सत्संगतिः सर्वान्कामान्पूरयति—

**कल्पद्रुमः कल्पितमेव सूते सा कामधुक् कामितमेव दोग्धि ।**
**चिन्तामणिश्चिन्तितमेव दत्ते, सतां तु संगः सकलं प्रसूते ॥**

संसर्गस्य प्रभाव इतिहासग्रन्थेष्वपि गोचरीभवति । वाल्मीकिप्रभृतयः प्रसह्यचौराः साधुसंसर्गेण मुनिपुंगवा अभवन् । कबीरोऽपि सत्संगादेव महात्माऽजायत । शाहजानस्य पुत्रो दारा पण्डितप्रवरजगन्नाथस्य संसर्गेण विद्यामधीत्योपनिषदामुपरि भाष्यं चकार ।

बालेषु संगतेः प्रभावोऽधिकतरो जायते यतस्तेषां चित्तानि निर्मलानि भवन्ति । श्वेतवस्त्रेषुराग इव तेषां हृदयेयेषु गुणदोषौ प्रसरतः यद्यैकवारं ते विपथगामिनो भवेयुस्तर्हि कोटिमात्रेणापि यत्नेन सत्पथे तेषामानयनं दुष्करम् । अतः कुसंगत्या बालाः सदा परिवर्जनीयाः अकाट्यो दुर्जनसंगत्याश्च प्रभावः खलु । कुसंगपतितो जनो न सद्वृत्तं रक्षति, न कर्त्तव्यमपेक्षते, न कुलमर्यादां पश्यति, न शीलं गणयति । स तु दुर्व्यसनासक्तः स्वविनाशाय गर्त्तं खनति । कदाचिन्महात्मानोऽप्यस्याः प्रभावेण सन्मार्गभ्रष्टाः संजाताः । अतएव कश्चित्कविराह—

**वरं गहनदुर्गेषु भ्रान्तं वनचरैः सह ।**
**न दुष्टजनसम्पर्कः महेन्द्रभवनेष्वपि ॥**

दृष्टः भवद्भिः प्रभावः संसर्गस्य सत्संगो हि सर्वसुकृतां प्रदीपः सद्वृत्तस्य च बोधकः । सर्वगुणानां निधानमियं सत्संगतिः अतएव सुष्ठु कथितं भर्तृहरिणा—

**जाड्यं धियो हरति सिञ्चति वाचि सत्यं ।**
**मानोन्नतिं दिशति पापमपाकरोति ॥**
**चेतः प्रसादयति दिक्षु तनोति कीर्तिं ।**
**सत्संगतिः कथय किं न करोति पुंसाम् ॥**

०

## ८. अस्माकं महाविद्यालयः

विद्यालयाः वह्वीषु श्रेणीषु विभक्ताः सन्ति। केचित् विद्यालयाः प्रथमकक्षातः आरभ्य पंचमकक्षापर्यन्तं सन्ति, केचित् षष्ठकक्षातः आरभ्य अष्टम कक्षापर्यन्तं वर्तन्ते, अपरे च नवमकक्षातः समारभ्य द्वादश कक्षा-पर्यन्तं शिक्षां ददति। केषुचित् च विद्यालयेषु त्रयोदशकक्षायाः, चतुर्दश कक्षायाः पठनं पाठनं च भवतः। अन्येषु पंचदशकक्षा, षोडशकक्षा च पाठ्येते। पंचम कक्षापर्यन्ताः विद्यालयाः प्राथमिकाः विद्यालयाः, अष्टम कक्षापर्यन्ताश्च माध्यमिक विद्यालयाः, द्वादशकक्षा पर्यन्ताश्च उच्चतर माध्यमिक विद्यालयाः उच्यन्ते। त्रयोदश चतुर्दश कक्षयोः च अध्यापनं यत्र भवति, ते स्नातक महाविद्यालयाः डिग्रीकालेज पदवाच्याः भवन्ति। अनन्तरं च स्नातकोत्तर महाविद्यालया भवन्ति।

यस्मिन विद्यालयेऽहं शिक्षां गृह्णामि, सः महाविद्यालयः स्नातकोत्तर महाविद्यालयः वर्तते। एष मम महाविद्यालयः प्रकृतेः रमणीये प्राङ्गणे वर्तते। नगर कोलाहलात् सुदूरं पुष्पिताभिः लताभिः, फलप्रदैः वृक्षैः च-परिवृतोऽयं विद्यालयः काम् अपि अनिर्वचनियां प्रकृतेः शोभां संपादयति। विद्यालयस्य-बहिर्भागे स्थिताः वृक्षाः अवनत शाखाबाहुभिः प्रणमन्त इव आभान्ति। अस्य महाविद्यालयस्य भवनं स्वकीयया विशालतया–विशाल-हृदयानां महानुभावानां चरित्राणि स्मारयन् इव वर्तते। महाविद्यालयस्य विशाले भवने अनेके कक्षाः सन्ति। प्रत्येक कक्षः ईदृशः वर्तते, यत्र संप्रति संख्याकाः छात्राः सुविधापूर्वकं स्थित्वा पठितुं शक्नुवन्ति। महा-विद्यालयस्य रमणीयता च सर्वेषाम् एव सहृदयानां चेतांसि बलादेव अपहरति। अत्र–सुरित्राः अध्यापकाः विविध विषयाणां विज्ञातारः परि-श्रमिणश्च सुनिपुणम् अस्मान् छात्रान् शिक्षयन्ति। एतेऽस्माकं मान्याः गुरवः अस्मभ्यम् सदाचारस्य, विनयस्य, अनुशासनस्य, समाजसेवायाः, देशभक्तिभावनायाश्च शिक्षां ददति। धन्याः अस्माक गुरवः, येभ्यः विविधविषयिकां शिक्षां परिगृह्य छात्राः स्वकीये जीवने सफलाः

संजाताः। अस्माक महाविद्यालयः वस्तुत एव विद्यायाः आलयः, विद्यायाः मन्दिरम्, यत्र–अस्साक पूज्याः गुरवः अत्यन्तं प्रशसायाः भाजनम्।

अस्मिन् मम स्नातकोत्तर महाविद्यालये—अनेके विषयाः पाठ्यन्ते। स्नातकोत्तर कक्षापर्यन्तं साहित्यिक विषयाः—हिन्दी, संस्कृतम्, आंग्ल-भाषा, इतिहासः, राजनीतिशास्त्रम्, आदिविषयाः तथा विज्ञानस्य सर्वे एव विषया अपि अत्र अध्याप्यन्ते। शताधिक सख्याकाः अत्र प्राध्यापकाः सन्ति। अष्टसहस्र संख्याका अत्र छात्र छात्राश्च शिक्षां गृह्णन्ति। अस्माक महाविद्यालयस्य प्रधानाचार्य महोदया विविध विषयाणां ज्ञातरः वर्तन्ते। 'विद्या ददाति विनयम्' इत्यस्य—साक्षात् प्रतिमूर्तिः वर्तते अस्माकं प्राचार्य महोदयः। न केवलम् प्राचार्य महोदया एव, अपितु अन्ये प्राध्यापक महोदया अपि स्वस्व विषयाणां परिज्ञातारः सन्ति। अत्रत्याः छात्राः अत्यन्त विनीताः श्रद्धावनताश्च वर्तन्ते।

अत्र विद्यार्थिनः न केवलम् अध्ययने एव संलग्नाः, अपितु क्रीडने, धावने, तरणादौ अपि तेषाम् अधिकाधिक प्रवृत्तिः वर्तते। ये छात्राः अध्ययनाति रिक्तेषु क्रीडनादि कार्येषु–विशिष्टं स्थानं लभन्ते, ते विशेषतः पुरस्कृताः अपि भवन्ति, सम्मानसूचक प्रमाणपत्राणि अपि चोपलभन्ते।

इदानीं विविधेषु महाविद्यालयेषु–प्रबन्धसमितौ-सदस्यानां पारस्परिकं वैमनस्यं प्रायः समुपलभ्यते, तत् अस्माकं महाविद्यालयस्य प्रबन्धसमिति सदस्येषु रञ्चमात्रम् अपि नास्ति। संक्षेपतः इदं कथयितुं शक्यते यत् अस्माकं महाविद्यालयस्य विशालं भवनं, विद्वांसः प्राध्यापकाः, योग्य-तमाः प्राचार्यमहोदयाः, विविधविषयाणां शिक्षणम्, क्रीडनादिकस्य च महान् प्रबन्धः—इत्येतत् सर्वमेव महाविद्यालस्य श्रियं पुष्णाति। वयम् एतस्य महाविद्यालयस्य सर्वदा एव उन्नतिम् कामयामहे।

## १०. शरीरमाद्यं खलु धर्मसाधनम्

संसारे मानवः यत्किमपि कार्यं करोति, तस्य साधनं शरीरमेवास्ति। शरीरं विना मनुष्यः किञ्चिदपि कार्यं कर्तुं न शक्नोति। स्वार्थसिद्धिः,

परोपकारः—इत्येतद्द्वयमपि शरीरेणैव सिद्ध्यति। यथा मन्दिरे प्रतिष्ठापितानां मूर्तीनां शुद्धयर्थं मन्दिरस्य शुद्धिः अपेक्ष्यते, तथैव आत्मनः शुद्धयर्थम् अपि शरीरस्य शुद्धिः नितान्तम् अपेक्षिता आस्ते। यदि नाम शरीरम् अस्वस्थं भविष्यति, तदानीं तस्यान्तर्वर्ती आत्मा, तत्सबन्धि मनश्च अपि स्वस्थे भविष्यतः। पुरुषार्थ चतुष्टयस्यापि सिद्धिः मानवस्य शरीरम् अपेक्ष्य एव भवति। यदि च शरीरम् अस्वस्थं भविष्यति, तदानीं तु धर्मादि पुरुषार्थं चतुष्टयस्य सिद्धिः भवितुं नार्हति। उक्तं च तथा—'धर्मार्थ माममोक्षाणामारोग्यं मूलमुत्तमम्।'

शरीरस्य स्वास्थ्य रक्षार्थं बहवः उपायाः सन्ति। यदि मनुष्यः शरीर रक्षार्थं निश्चितान् नियमान् न पालयति, तदानीमेव सः अस्वस्थः भवति। शरीररक्षार्थं मनुष्यः शारीरिकं श्रमम् अवश्यमेव कुर्यात्। यः मनुष्यः प्रातरारभ्य सायं यावत् शरीरश्रमम् अकृत्वा एव तिष्ठति, तस्य पाचनक्रिया क्षीणा भवति। अन्नं च सुष्ठु नैव पचति।

अतएव स्वास्थमिच्छता पुरुषेण शरीरश्रमः अवश्यमेव कर्तव्यः। उक्तं चापि 'अजीर्णे भोजनं विषम्' इत्यदि।

स्वास्थ्यलाभाय पुंभिः बहुविधाः व्यायामाः अपि निर्दिष्टाः सन्ति। भ्रमणं, क्रीडनम्, अश्वारोहणम्, जले तरणम्, मल्लयुद्धम्, योगासनानि, फूटबाल–वालीबाल–क्रिकेट–आदि नवनवानां क्रीडानामभ्यासः, इत्यादयः सन्ति व्यायामस्य प्रकाराः। परन्तु एतत् सर्वथा विचार्यं वर्तते यत् यमपि व्यायामं मनुष्यः गृह्णीयात्—स नियमितः स्यात्। एतदतिरिक्तं मानवः स्वकीयेआहारे विहारे चापि नियमम् आचरेत्। उक्तं चापि गीतायाम्—

'युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु।

**युक्त स्वप्नाववोधस्य योगो भवति दुःखहा॥'**

एतद्धि प्रायशः दृश्यते एव यत् स्वस्थाः पुरुषाः एव सोत्साहं स्वकीयाणि परकीयाणि च कार्याणि कर्तुंम् समुत्सुकाः भवन्ति। देशस्य, समाजस्य, आत्मनश्च हितसाधकं यदपि—कर्म धर्मानुकूलं भवति,

तत्सर्वं स्वस्थशरीरेण एवं संपादयितुं शक्यते। धर्माचरणं विना मनुष्यस्य जीवनं निरर्थकमेव मन्तव्यम्। यतः संसारोऽयं धर्ममूलकः। गीतायाम् उक्तमस्ति—

'धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ।' "धर्मोधारयते प्रजाः' इत्यपि चोक्तं वर्तते। धर्मः खलु मानवजीवनस्य मूल प्रेरकः। अतएवोक्तम्—'धर्मेण लभ्यते सर्वं धर्मसारमिदं जगत्।'

परन्तु स्वस्थ शरीरं विना तु धर्मसा..नं कर्तुं न कोऽपि प्रभवति। अतः मनुष्यः धर्मसाधनस्य मूलं शरीरस्य आरोग्यं साधयितुम् अवश्यमेव तत्परः भवेत्।

यथैव मनुजाय शास्त्राध्ययनम् आवश्यकम्, तथैव शरीरस्य स्वार्थ चिकीर्षाऽपि मतुजाय हितकरी। शास्त्राणाम् अध्ययनं बुद्धिं विकासयति, परन्तु कस्यचिदपि पुंसः बुद्धेः विकासः शरीरस्य स्वास्थ्यम् विना सिद्धः भवितुं नार्हति। स्वस्थे शरीरे एव बुद्धिः मनश्च स्वस्थे स्थास्यत-। एतस्य भावस्य पुष्टिः सुश्रुते कृता वर्तते—यथा—

'शरीरे चैव शास्त्रे च दृष्टार्थः स्याद्विशारदः।'

महाकविः कालिदासः अपि स्वकीये काव्यग्रन्थे कुमारसंभवनाम्नि—इममेव भावं दृढीकरोति। तपस्यन्त्याः पार्वत्याः समक्षं ब्रह्मचारिवेशधारी शिवः प्रथमं पार्वत्याः स्वास्थ्यसंबन्धिनः प्रश्नान् एव अकरोत्। सः पार्वत्यै अकथयत् यत् "धर्मस्तु शरीरेण, वाचा, बुद्धया धनादिना बहुभिः साध्यते, एषु शरीरम् एव मुख्यं साधनम् अस्ति। सति शरीरे धर्मार्थ-काममोक्षलक्षणाः चतुर्वर्गाः साध्यन्ते। अस्मिन् विषये—'सर्वत आत्मानं-गोपायेत्' इति श्रुतिः।" ततश्च शिवः पार्वतीं संबोध्य कथयति—'स्व-सामर्थ्यानुसारं एव त्वं तपः करोषि? शरीरं पीडयन् तपः समाचरणं तु नोचितम्, यतः शरीरमेव नूनं धर्मस्य प्रधानं साधनम् अस्ति—

'अपि स्वशक्त्या तपसि प्रवर्तसे।

शरीरमाद्यं खलु धर्मसाधनम॥'

इत्थम् उपरोक्त विवेचनेन इदं पूर्णतः सिद्धं भवति, यत् धर्मसाधनं मानवस्य प्रमुखं लक्ष्यं, तच्च शरीरेण, तत्रापि स्वस्थशरीरेण एव सिद्धयति। अतः धर्मसाधनार्थम् पुरुषः शरीरस्य स्वास्थ्यरक्षार्थम् अवश्यमेव प्रयत्नशीलः भवेत्—इत्यलम्।

## ११. पर्वतराजो हिमालयः

पर्वतेषु राजते अथवा पर्वतानां राजा—इति विग्रहद्वयेऽपि एतस्य वर्ण्यविषयस्य पर्वतस्य सर्वेषु पर्वतेषु श्रेष्ठता सुतरां सिद्धयति। अस्य शिखराणि सर्वदाहिमेन आच्छादितानि भवन्ति–इति कृत्वा एव एतस्य नाम हिमालयः हिमवान् वा वर्तते। हिमस्य आलय इति हिमालय इति अन्वर्थं नामास्ति एतस्य पर्वतराजस्य। समस्तायां भुवि नान्यः कश्चित् पर्वतः एतावान् उच्चः यथा अयं पर्वतराजो हिमालयः। उत्तुङ्ग शिखरैर्विभूषितः अयं पर्वतः भारतमातुः किरीट इवास्ते। एतस्य पर्वतस्य उच्चतमे शिखरे पार्वती शिव ध्यायन्ती तपः कर्तुम् आरब्धवती। तत् शिखरं पश्चात् गौरीनाम्ना एव प्रसिद्धिं गतम्। तत एव एतस्य नाम गौरीशिखरम्–इत्यभवत्। अत्युन्नतत्वात् न केवलम् अयं पर्वतः अस्मान् भारतीयान् शीतवायोः रक्षति, अपि तु शत्रोः आक्रमणात् अपि देशस्य रक्षां करोति।

एतस्य पर्वतस्य प्राकृतिक रमणीयता तु दर्शनीया एव आस्ते। हिमेन मण्डितानि अत्युच्चानि एतस्य शिखराणि, विवधं राजमानाः स्वकीयाभिः निर्मलजलधाराभिः समेषु विषमेषु च मार्गेषु प्रवहन्त्यः विशाला नद्यः, विस्तब्धं विचरन्तः सिंहगजादयः मृगादयश्च पशुपक्षिणः, विविधाः वनस्पतयश्च एतत् सर्वं पर्वतशोभासंदिदृक्षोः कस्य जनस्य चेतः नाकर्षति। एतस्य कैलासशिखरम् अत्यन्तं रमणीयम् अस्ति। अत्र भगवतः शिवस्य लिङ्गं वर्तते। अन्यदपि प्रकृतेः रामणीकत्वम् हृदयाह्लादकरं वर्तते चात्र।

एतस्मात् पर्वतात् निर्गच्छन्ति महत्यो नद्यः। नदीजलेभ्यः कुल्याः निष्कास्यन्ते, ताभिश्च कृषीवलानां क्षेत्राणि सिक्तानि भवन्ति। एवं च

धान्यसंपदः, अन्नस्य वा उत्पत्तिः भवति। 'अन्नं वै प्राणाः' इत्येवं पर्वतराजोऽयम् अस्मभ्यम् अन्नं दत्त्वा अस्मान् पोषयति। कियदुपकरोत्ययं पर्वतराजः अस्मान्, वयम् भारतीयाः एतस्य नगाधिराजस्य उपकारं कदापि विस्मतुं न शक्नुमः। अपि च एतस्य महतः जलसंघातात् एव विद्युत् उत्पाद्यते। सांप्रतिके जीवने विद्युतः कियान् उपयोगः इति तु सर्वे जानन्त्येव। शीतकाले उष्णताम्, उष्णकाले च शीतताम् संपादयितुम् इयं विद्युदेव प्रभवति। अतः अस्माकं दैनिकजीवनेऽपि विद्युद्दानादिना अयं नगाधिराजः अस्मान् उपकुर्वन् वर्तते।

एतस्य नगाधिराजस्य उपत्यकासु अधित्यकासु च नैनीताल, मंसूरी, शिमला, दार्जिलिङ्ग, अल्मोड़ा, गढ़वाल—इत्यादिनी नगराणि अतीव रमणीयानि सन्ति। अनेनैव पर्वतेन रामणीयकत्वम् धारयति भारतभुवः स्वर्गरूपः काश्मीर प्रदेशः। धनिकाः पर्यटकाश्च गीष्मतौं एतान् पार्वत्य प्रदेशान् आगत्य अत्रत्यां नैसर्गिकीं शोभां दृष्ट्वा प्रमुदिता भवन्ति। बहवः स्वास्थ्यलाभाय अपि एतानि नगराणि आयान्ति। इत्थं स्वास्थ्य दृष्ट्या, वायुपरिवर्तन दृष्ट्या, मनोरञ्जनदृष्टयो च एतस्य पर्वतराजस्ये महत्वं मान्यं भवति।

इत्थं सुनिपुणं निरीक्ष्य वयम्—एतत् मुक्तकण्ठं वक्तुम् शक्नुमः यत् अयं नगराधिराजः हिमालयः वैदेशिकेभ्यः आक्रमणेभ्यः अस्मान् परिरक्षति, भास्वन्ति रत्नानि महौषधीन् च अस्मभ्यं प्रददाति, जलसिञ्चनादिना अन्नदानादिना अस्मान् पोषयति, स्वकीयनैसर्गिक शोभया, प्रकृतेः रामणीकत्वेन च अस्माकं मनांसि मोदयति। किं बहुना, संक्षेपत; 'किं किं न साधयति पर्वतराज एषः' इत्युक्त्वा एव एतस्य पर्वतराजस्य वयं महत्वम् स्वीकुर्मः।

महाकविना कालिदासेनापि एतस्य—पर्वतराजस्य स्वरूपं कुमारसंगवस्य आदिमे श्लोके वर्णितम् तद्यथा—

'अस्त्युतरस्यां दिशि देवतात्मा हिमालयो नाम नगराधिराजः।
पूर्वापरौ तोयनिधी वगाह्य स्थितः पृथिव्या इव मानदण्डः॥'

# १२. गुरोर्महिमा

परमात्मनः सृष्टिः द्विविधा वर्तते। जड़सृष्टिः चेतनसृष्टिः च। चेतनसृष्टौ पश्वादय मनुष्याः च परिगण्यन्ते। तत्र मानवसृष्टौ स्वसन्ततीनां पालनं पोषणं च तेषां माताः पितरश्च कुर्वन्ति। ते स्वबालकान् संपुष्य तेषां शरीराणां विकासं कुर्वन्ति। पितरः केवलं स्वसंततिभ्यः भोजनानि वस्त्राणि च ददति, तेषां भौतिकीम् आवश्यतामात्रं ते प्रपूरयन्ति, किन्तु यदा बालकाः शरीरेण पुष्टाः कार्यकरणक्षमाः च संजायन्ते, तदानीम् गुरोः परमावश्यकता भवति। गुर्हि ज्ञानप्रदाता भवति। येन मनुष्येषु पशुषु च भेदः कर्तुं शक्यते। गीतायाम् कथितमस्ति यत्—'बुद्धिर्बुद्धिमतामस्मि।' तत्तु सर्वथा गुरुणा एव साधयितुं शक्यते। गुरुः ज्ञानं ददाति। ज्ञानदानं हि सर्वेभ्यः दानेभ्यः विशिष्यते। अत एतत्तु सुनिश्चितमेव यत् उत्पादकात् जनकात् ज्ञानप्रदाता गुरुः गरीयान् भवति।

भारतीयसंस्कृतौ गुरोर्महिमा विशेषतः वर्णितः वर्तते। अत्र तु एकाक्षरप्रदाताऽपि गुरुर्मन्यते किमुत यः शिष्येभ्यः विविधज्ञानप्रदानि शास्त्राणि पाठयति। अज्ञानान्धस्य लोकस्य ज्ञानांजनशलाक्या गुरुरेव चक्षुः उन्मीलयति। 'असतो मा सद्गमय, तमसो मा ज्योतिर्गमय, मृत्योर्माअमृतं गमय' इत्यादि सदुपदेशं विवेकबुद्धेः जागरणं च कर्तुं केवलं गुरुः एव पारयति।

प्राचीनकाले गुरुशिष्ययोः संबन्धः अत्यन्तं श्लाघनीय आसीत्। गुरुः शिष्यं पुत्रादप्यधिकं मन्यते स्म। सः शिष्यस्य सर्वात्मना हितं कामयते स्म। शिष्याः अपि गुरुं परमात्मानम् अमन्यन्त। शिष्याणां कृते गुरोराज्ञा परमात्मनः आज्ञेव आसीत्। परंतु सांप्रतिके काले गुरुशिष्ययोः सम्बन्धे किञ्चित् वैषम्यं समागतम्। शिष्याः यथा पुरा—गुरून् नाद्रियन्ते। अत्र बहूनि कारणानि सन्ति। केवलं शिष्याणामेव नापराधः, अत्र समाजस्य शिक्षायाः पद्धतेश्चापि दोषः वर्तते।

यद्यपि सांप्रतं गुरुशिष्ययोः सम्बन्धे प्राक्तनी शालीनता नास्ति,

तथापि इदानीन्तने कालेऽपि बहवः तादृशाः शिष्याः सन्ति, ये गुरुभ्यः सम्यक् प्रणमन्ति, सविनयं व्यवहरन्ति, अनुशासनं मन्यन्ते, शिष्टाचारं च आचरन्ति ।

अद्य छात्रा अधीत्यापि जीवनेऽसफला भवन्ति । एतस्य कारणम् अस्ति यत्ते गुरोः भक्तिं, तस्य सेवां सुश्रूषां च नाचरन्ति । गुरोः कृपया यः ज्ञानलाभः भवति, स जीवनायात्यन्तं हितकरः । आयोदधौम्यस्य महर्षेः उपमन्युनामकः शिष्यः कियान् गुरुभक्तः आसीत् । गुरोः आज्ञामनुपालयन् अन्धत्वमापन्नोऽपि सः गुरोः कृपया पुनश्चक्षुष्मान् संजातः । ईदृशी अस्ति गुरोः कृपा । गुरोर्महिमानं वर्णयितुं कः शक्नोति । सत्यमेवोक्तं यत्र—

**'अध्यापिता ये गुरून् नाद्रियन्ते विप्रा मनसा वाचा कर्मणा वा ।**

**यथैव ते न गुरोर्भोजनीया स्तथैवतान्नभुनक्ति श्रुतं तत् ।**

गरुकृपया मनुष्यः प्रथमतः अक्षरज्ञानं लभते, ततः शास्त्राणां ज्ञानंप्राप्नोति । ततश्च स्वजीवने तदनुकूलमाचरणं करोति । परमात्मनः ज्ञान मपि गुरुरेव प्रददाति । सर्वे वेदाः, उपनिषदः, ब्राह्मणग्रन्थाः, आरण्यकादि सर्वशास्त्रीयं ज्ञानजातं गुरुकृपां विना नैवोपलब्धुं शक्यते । अतः सत्यमेवोक्तं यत् गुरोर्महिमाऽत्यन्तं गरीयान् । वेदेऽपि गुरोर्महिम्नः बहुप्रकारकं वर्णनम् उपलभ्यते । यथा—

**'तं मन्येत पितरं मातरं च तस्मै न द्रुह्येत कतमच्चनाह ।'**

# १३. भारतस्य महिमा

यत्र अस्माभिः जन्म गृहीतम्, यत्र अस्माभिः क्रीडितम्, यस्य अन्नेन पानेन च अस्माकं शरीराणि पुष्टानि संजातानि, तस्य अस्माकं देशस्य नाम भारतवर्षम् अस्ति । अस्य देशस्य श्रीः समृद्धिश्च अन्येभ्यः देशेभ्यः प्रतिविशिष्यते । धरातले नान्यो देशस्तादृशः वर्तते, यादृशः अस्माकं देशः भारतः ।

अस्माकं देशस्य भौगोलिकीस्थितिः अन्येभ्यो देशेभ्यः अत्यन्तं सुदृढा रमणीया च। अत्र षड्ऋतवः भवन्ति, यथा—वसन्तः, ग्रीष्मः, वर्षा, शरत्, हेमन्तः, शिशिरश्च। एतेषां ऋतूनां क्रमशः आगमनम् देशस्य प्राकृतिकीं शोभां वर्द्धयति। न कोऽपि एतादृशो देशः यत्र पूर्णाः षड् ऋतवः मिलित्वा तस्य शोभां संवर्धयेयुः।

अस्य देशस्य उत्तरस्यां दिशि पर्वतराजो हिमालयः एतस्य रक्षकः प्रहरी इव वर्तते। दक्षिणस्यां दिशि हिन्दमहासागरः अपि एतस्य रक्षां कुर्वन् आस्ते। एवमेव पूर्वस्यां दिशि पूर्वीय सागरः पश्चिमायां च पश्चिमीय सागरः अपि शोभमानः अस्ति। एवं चतुर्भ्यो दिग्भ्यः एतस्य सुरक्षा वर्तते। प्रकृतेः कमनीयैः रक्षासाधनैः सम्पन्नोऽयं भारतो देशः अन्येभ्यो देशेभ्यः सुतरां विशिष्यते।

कृषि प्रधानेऽस्मिन् देशे कृषकाः परिश्रमेण अन्नफलादिकम् उत्पादयन्ति। गङ्गा-यमुना-गोदावरी-नर्मदा-कावेरी-प्रभृतयः महानद्यः स्वकीयाभिः जलधाराभिः भारतस्य भूमिं सुजलां कुर्वन्ति, येनास्यभूमिः सुफलाऽपि वर्तते। मलयजशीतलः सुरभिर्वातः कस्य सचेतसः मनः नाह्लादयत्यत्र। विविध प्राकृतिकसाधनैः संपन्ना अस्य भारतस्य भूमिः शस्यैः श्यमला अपि वर्तते। अतएव सत्यमेवोक्तमस्ति यत्—

**'सुजलां सुफलां मलयजशीतलाम्,**
**सस्यश्यामलां मातरं वन्दे मातरम्।'**

अस्मिन् देशे प्रयागः, वाराणसी, कलिकाता, दिल्ली, मुम्बई—इत्यादीनि प्रसिद्धानि—मनोहराणि च नगराणि सन्ति। आगरा नगरे स्थितं ताजमहलं कस्य सचेतसो मनः–नाह्लादयति। दिल्ली नगरस्य महरोलीति स्थाने कुतुबमीनारम् स्वीयोच्चतायाः निदर्शनं वर्तते। प्रयागे गङ्गा-यमुनयोः संगमं निरीक्ष्य को न मोदते। एवम् भारतस्य अन्येष्वपि प्रदेशेषु विविधानि मनोहराणि ऐतिहासिकानि च स्थानानि सन्ति।

अयं देशः यथा कृषि प्रधानः तथैव धर्मप्रधानोऽप्यस्ति। अत्र बहूनि तीर्थस्थानानि अपि सन्ति। हरिद्वार-ऋषिकेश-बद्रीनाथ-केदारनाथ आदि

तीर्थस्थनानि पार्वत्य प्रदेशेषु रमणीयेषु स्थलेषु विराजन्ते। यत्र धार्मिकाः जनाः प्रतिवर्षम् समयानुसारं स्वगृहकार्येभ्यः समयं निष्कास्य तत्र परिभ्रमणार्थं गच्छन्ति। एतदतिरिक्तं वृन्दावने मथुरानगर्यां च भगवतः कृष्णस्य सुचरितानि स्मारयन्ति बहूनि स्थानानि सन्ति। महानद्यः गङ्गायास्तटप्रदेशेषु अनेकानि तीर्थस्थानानि सन्ति।

अयमेव स देशो यत्र रामः कृष्णः बुद्धः तथा अन्येऽपि अनेके महापुरुषाः अभवन्। अत्रैव वैदिका ऋषयः, उपनिषदां प्रणेतारः महर्षयः, दार्शनिका विद्वांसः अपि अभवन्। किमधिकं वर्णयाम एतस्य विशालस्य महाप्रदेशस्य भास्तस्य विषये। अत्र प्रकृतेः रामणीयकत्वम्, नैसर्गिकी सुषमा, नदीनां वनानाम् उपवनानां च मनोहारिता, धर्मस्थलानां तीर्थस्थानानां च वैविध्यम्, एतत् सर्वं परिनिरीक्ष्य एतदेव कथयितुं शक्यते यत्—'दुर्लभं भारते जन्ममानुष्यं।' देवा अपि अत्र भारते जन्म गृहीतुं समुत्सका इव वर्णिताः सन्ति—

गायन्ति देवाः किलगीतकानि धन्यास्तु ये भारतभूमिभागे।
स्वर्गापवर्गास्पद मार्गभूते भवन्ति भूयः पुरुषाः सुरत्वात्।

## १४. मानवजीवनस्योद्देश्यम्

अस्यां विशालायां प्रकृतौ मानवः सर्वेभ्यः प्राणिभ्यः विशिष्टः प्राणी वर्तते। ऋषिभिः, महर्षिभिः, नीतिविज्ञैश्च एतत् प्रायशः प्रतिपादितं यत् मानवस्य जन्म महता पुण्येन भवति। अतः महद्भिः पुण्यैः प्राप्तं मानवस्य जन्म व्यर्थं न भवेत् इत्येतदर्थम् ऋषिभिः मानवजीवनस्य साफल्यार्थं बहवः प्रकाराः प्रदर्शिताः, मानवजीवनस्य किम् उद्देश्यम्—इत्यपि प्रतिपादितम्। वस्तुतः निरुद्देश्यं जीवनं जीवनमेव न मन्तव्यम्। तत्रापि मानवस्य विद्याबुद्धिविवेकसहितस्य प्राणिनः जीवनं निरुद्देश्यकं व्यर्थं च भवदिति तु अतीव कष्टप्रदम्।

संसारे बहुविधाः संस्कृतयः सभ्यताश्च वर्तन्ते। मुण्डे मुण्डे मतिर्भिन्ना अस्ति। केषांचित् संस्कृतौ केवलं भौतिसाधनानां संपन्नता एव मानव-

जीवनस्य साफल्यं गणितम् अस्ति। केषांचित् संस्कृतयः च मानवजीवनस्य साफल्यार्थं किमप्यन्यदेव प्रतिपादयन्ति। परंतु अस्माकं भारतीया संस्कृतिः मानवजीवनस्य उद्देश्यं यथा वर्णयति, तत्तु अतीव विचारपूर्णं सारगर्भितं चास्ति। भारतीय संस्कृतौ अस्माभिः पूर्वपुरुषैः मानवजीवनस्य उद्देश्यम् पुरुषार्थचतुष्टयं वर्णितं वर्तते। तच्च पुरुषार्थचतुष्टयमस्ति धर्मार्थकाम-मोक्षस्वरूपम्। सर्वतः प्रथमं मानवस्यकर्तव्यं धर्मोपार्जनम् अस्ति। धर्म-शब्दः अत्यन्तं विस्तृतमानवगुणान् स्मारयति। सर्वे मानवोचिताः गुणा धर्मपदवाच्या भवन्ति। उक्तं च यथा—

**धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रह।**
**धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्॥**

एतदतिरिक्तमपि समाजस्य देशस्य च सेवा अपि मानवोचितधर्मेषु एव परिगण्यते। यः पुरुषः धर्मं पालयति, धर्मस्तम् अनुपालयति। यश्च धर्मम् उपेक्षते, धर्मोऽपि तस्य उपेक्षां करोति। तदेवोक्तं यथा—

**'धारणाद् धर्म इत्याहुः धर्मो धारयते प्रजाः।**

मानवस्य जीवनं पशुभ्यः, इतरसृष्टेश्च भिन्नमित्यत्र धर्म एव कारणम्। को धर्मः, कश्चाधर्म इति यो न वेत्ति, न स मानवः। धर्मम् अजानन् मानवः पशुना तुल्यः भवति। उक्तं च यथा—

**धर्मो हि तेषामधिको विशेषः**
**धर्मेण हीनाः पशुभिः समानाः।**

अतः पशुत्वस्य निराकरणार्थम् अवश्यमेव धर्माचरणं विधेयम्।

पुरुषार्थचतुष्टयस्य द्वितीयः पुरुषार्थः वर्तते—अर्थः धनमिति वा। यद्यपि धनधर्मयोः मध्ये धर्मस्य एव प्राधान्यम् तथापि जीवनस्य संचालनार्थं व्यवहारोपयोगिवस्तुजातसंग्रहार्थं च धनस्य अत्यन्तम् आवश्यकत्वम् अस्ति। गृहस्थजीवनं यापयतः पुंसः कृते तु धनस्य परमावश्यकता। तदानीं तु 'सर्वे गुणाः काञ्चनमाश्रयन्ते' इति कथनं सत्यमेव भवति।

अत्र एतत् सर्वथा विचारणीयमस्ति यत् अर्थोपार्जनमपि धर्ममूलकमेव स्यात्। अधर्माचरणेन उपार्जितं धनं मानवजीवनस्य उद्देश्यं नैव भवति।

मानवजीवनस्य तृतीयः पुरुषार्थः अस्ति कामः। कामशब्दः इच्छा-परपर्यायः। यथा गीतायाम् उक्तम् अस्ति 'धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ' इति। अतः मानवः कामप्राप्तिम् अपि धर्ममूलकाम् एव कुर्यात्। अस्य लोकस्य सुखोपभोगलिप्सा, भौतिकसाधनानामुपलब्धिः, यशसः प्राप्तिः-इत्येतानि सर्वाणि वस्तूनि कामपदवाच्यानि भवन्ति। संक्षेपतः मानवः जीवनस्य सुखसमृद्ध्यर्थं यत् किमपि कामयते तत् सर्वं कामपदवाच्यं भवति। परंतु स कामः धर्माविरुद्धः भवितव्यः इति-शास्त्रादेशः।

चतुर्थः पुरुषार्थस्तु मोक्षः अस्ति। मानवः जीवनमरणात्मकबन्धनात् मुक्तः भवितुम् इच्छति। पुरुषः जन्मगृह्णाति, अनेकानि कष्टानि सहते, तदनन्तरं च वृद्धो भूत्वा पञ्चत्वं गच्छति। पुनः पुनः जन्मग्रहणं पुनः पुनः च मरणं न भवेदित्येदर्थं मानवः ऋषिमहर्षिभिः प्रतिपादिताम् मोक्षपद्धतिम् अनुसृत्य जीवनं सफलं कुर्वन्ति।

एवं पुरुषार्थचतुष्टयेन युक्तं मानवजीवनम् अवश्यं सफलं भवितुमर्हति। धर्मार्थकाममोक्षरूपि-पुरुषार्थचतुष्टयं मानवजीवनस्य परममुद्देश्यमिति सर्वथैव निश्चितम्।

## ५. वैज्ञानिका आविष्काराः

सभ्यतायाः विकासेन सहैव मनुष्यः स्वकीयजीवनं सुखमयं विधातुं स्वजीवनोपयोगीनि वस्तूनि समुत्पादितवान्। आधुनिकः अयं युगः विज्ञानस्य वर्तते। मानवः विज्ञानस्य सहातया अनेकान् आविष्कारान् अकरोत्। यथा यथा मानवस्य आवश्यकताः वृद्धिगताः, तथा तथैव सः नवनवानां वस्तूनाम्—आविष्कारम् अकरोत्, यतः आवश्यकता हि आविष्काराणां जननीति कथ्यते। जीवनस्य प्रतिक्षेत्रं विज्ञानस्य अधिकारः वर्तते। चिकित्सा, शिक्षा, परिवहनम्, व्यापारः, युद्धः, शान्तिः—एतेषु सर्वेषु एव क्षेत्रेषु विज्ञानम् स्वकीयान् चमत्कारान् प्रादर्शयत्।

वाल्मीकिरामायणस्य महाभारतस्य, अन्येषाम् इतिहासपुराणादीना च अध्ययनेन इदं ज्ञायते यत् प्राचीनकालेऽपि विज्ञानं वृद्धिगतम् आसीत् । मेघनादस्य शक्तिप्रक्षेपणास्त्रेण मूर्च्छितः लक्ष्मणः हनुमता समानीतेन संजीवनीनामकौषधेन चेतनतां गतः । रामायणे वर्णितमस्ति यत् समुद्रे एका ईदृशी राक्षसीन्यवसत् या पक्षिणाम् प्रतिबिम्बानि गृहीत्वा एव तान् भूमौ निपातयति स्म । रामः रावणं विजित्य पुष्पकनामकेन विमानेन अयोध्याम् आगतः । नलनीलनामकौ बानरौ समुद्रोपरि सेतुबन्धस्य निर्माणम् अकुरुताम् । महाभारत युद्धे च प्रयुक्तानां शस्त्राणां, प्रक्षेपणास्त्राणामध्ययनेन ज्ञायते यत् तदानीं तु विज्ञानस्य चरमोत्कर्षः आसीत् । लाक्षागृहस्य निर्माणं तदानींतनेषु आश्चर्यजनकेषु वस्तुषु प्रधानतमम् आसीत् । किन्नायं वैज्ञानिकः कश्चित् महान् आविष्कारः यत् युद्धक्षेत्राद् बहिःस्थितोऽपि संजयः धृतराष्ट्राय सर्वं युद्धस्थले वर्तमानं वृत्तं न्यवेदयत् । एवम् अन्यानि अपि बहूनि एवंविधानि वस्तूनि तदानींतने युद्धे उपलब्धानि असन्, येन सरलतयैव इदम् अनुमातुं शक्यते यत् पुरा अपि भारते विज्ञानस्य चरमोत्कर्षः आसीत् ।

परम् प्राचीनकालस्य वैज्ञानिकाविष्काराणां वर्णनमेव नास्माकं विषयः । आधुनिके काले ये वैज्ञानिकाविष्काराः मानवजीवनाय सुखकराः, तेषां वर्णनम् अस्माकं लक्ष्यम् । विज्ञानम् अस्माकं जीवने महत्परिवर्तनम् अकरोत् । विद्युतः आविष्कारेण मानवः बहुविधानि सुखकराणि साधनानि निर्मातुम् समर्थोऽभवत् । भोजनस्य पाकार्थम् 'हीटर-इत्यादिकम्' विद्युद्-व्यजानि, टेलीफोन-रेडियो-इत्यादीनि चान्यानि साधनानि मानवजीवनाय सुखकराणि उत्पादितानि विद्युता एव । टेलीफोन यन्त्रस्य उपयोगः न केवले साधारणे जीवने, अपि तु व्यापारक्षेत्रेऽपि अस्य महान् उपयोगः दृश्यते । गृहे स्थितः एव व्यापारिवर्गः सुदूरस्थितप्रदेसेषु व्यापारवार्ताः कर्तुं सरलतयैव क्षमते ।

चिकित्साक्षेत्रेऽपि विज्ञानम् अभूतपूर्वं परिवर्तनम् अकरोत् । अन्धाः चक्षुष्यन्तः, पङ्गवश्च चलितुं क्षमाः कृता अनेनैव विज्ञानेन । 'एक्सरे' नामकं यन्त्रं तु शरीरस्य अन्तः वर्तमानान् विकारान् क्षणेनैव प्रकटीकरोति,

येन डाक्टरमहोदयाः मानवशरीरे-अन्तःस्थान् रोगान् सरलतयैव दूरीकर्तुं प्रभवन्ति ।

मनोरंजनक्षेत्रेऽपि विज्ञानस्य महनीयं योगदानं वर्तते । 'रेडियो' यदि गृहे वर्तते, तदानीं संसारस्य विविधेभ्यः क्षेत्रेभ्यः समाचाराः गानानि च श्रोतुम् शक्यन्ते । एकाकी जनः अपि रेडियो सहयोगेन एकाकित्वं नानुभवति, शिक्षा प्रसारोऽपि अनेन यन्त्रेण सुलभः कर्तुं शक्यते । टेलीविजन (टी० वी०) नामक यन्त्रस्य आविष्कारस्तु मनोरंजनस्य क्षेत्रे महदेव आश्चर्यं कृतवान् । जगतः विभिन्नेषु क्षेत्रेषु कीदृश्यः घटनाः घटमानाः सन्ति, तासां प्रत्यक्षदर्शनं कर्तुं पार्यते अनेन विस्मयजनकेन यन्त्रेण । कुत्रचित् अकालपीडिता जनता, कुत्रचित् जलाभावः, कुत्रचित् युद्धस्य विभीषका—इत्येतत् सर्वं प्रत्यक्षी कर्तुं शक्यते एतन्माध्यमेनैव ।

उपरोक्तः विज्ञानस्य निर्माणपक्षः अस्ति । अस्ति एतस्य विज्ञानस्य विनाशपक्षोऽपि । एटमबम, उद्जनबम—इत्यादीनां मानवसंहाराकानां शस्त्रास्त्रणां निर्माणमप्यनेन कृतमस्ति । कतिपयेषु क्षणेस्वेव संपूर्णं जगत् विनाशयितुं शक्यते अनेन विज्ञानेन । परंतु यदि वयम् सूक्ष्मदृष्ट्या विचारयामः तर्हि नायं विज्ञानस्य दोषः । विज्ञानं तु जडं वस्तु, तस्य सदुपयोगः, दुरुपयोगश्च मानवाधीनः वर्तते । अतः बुद्धिविवेकसहितोऽपि मानवः यदि—अविवेकेन जगतः संहारं कर्तुम् इच्छति, तदानीम् नायं विज्ञानस्य दोषः, अपि तु मानवः एव अत्र दोषी इति मन्तव्यम् ।

अतः अन्ते वयं सर्वेश्वरं भगवन्तं प्रार्थयामः यत् सः वैज्ञानिकेषु जनेषु सद्बुद्धिं जनयेत्, येन ते विज्ञानस्य उपयोगं निर्माणात्मकेषु कार्येषु कुर्युः, न च विनाशात्मकेषु कार्येषु ।

## १६. विद्वान् सर्वत्र पूज्यते

पूजायाः कामना प्राणिमात्रे नैसर्गिकी खलु । क्षुद्राः कृमिकीटप्रभतयोऽपि पूजार्थं समुत्सुका दृश्यन्ते । यदि कश्चित्तानर्चन्ति ते तं स्निह्यन्ति यदि कश्चित्तानभिद्रुह्यति ते तस्मात् पलायन्ते । कपोतादीनां स्वामिनं प्रत्यनुरागस्य कथां को न जानाति । वने विसर्जिता अपि ते तस्य गृहे पुनरायान्ति । पूजामभिलषतां अश्वकुक्करप्रभृतीनामितिहासप्रसिद्धानि

साहसिककार्याण्यादि सत्कुर्वन्तं स्वस्वामिनं प्रति तेषां प्रगाढ़मनुरागं प्रकटयन्ति । मानवस्तु विवेकशीलप्राणित्वाद्विशेषरूपेण पूजामभिलषति । अकीर्त्ति च स मरणादप्यधिकतरां कष्टप्रदां मन्यते—'सम्भावितस्य चाकीतिर्मरणादतिरिच्यते ।' यशः प्राप्त्यर्थं मनुष्यः स्वशरीरमपि पातयति सत्यमाह कश्चित्कविः—

**देहे पातिनि का रक्षा यशो रक्ष्यमपातवत् ।**
**नरः पतितकायोऽपि यशः कायेन जीवति ॥**

विद्या खलु सर्वोत्कृष्टं विचित्रं धनं वर्तते । एतद्धि एकमात्रं धनं यद्-व्यये कृतेऽपि वर्धते । न बन्धुभिर्वण्ट्यते । न चौरैरपह्रियते । न ध्वसते, न परिशुष्यति एतदनर्घं धनमनुप्राप्यैव मानवः सर्वत्र पूजामधिगच्छति । सुष्ठु आह कश्चित्कवि :—

**हर्तुं याति न गोचरं किमपि सपुष्णाति यत्सर्वदा ।**
**ह्यर्थिभ्यः प्रतिपाद्यमनिशं प्राप्नोति वृद्धिं पराम् ।।**
**कल्पान्तेष्वपि न प्रयाति निधनं विद्याख्यमन्तर्धनम् ।**
**येषां तान्प्रति मानमुज्झत नृपाः कस्तैः सह स्पर्धते ।।**

विद्यायाः साहाय्येन मनुष्यो धर्मार्थकाममोक्षेष्वन्यतममधिगन्तुं प्रभवति । नूनं विद्या मानवस्य तृतीयं ज्ञानचक्षुः । अनेन नीरक्षीरविवेकी भवति मानवः । विद्यादीपेनाज्ञानान्धकारो विनश्यति । धर्माधर्मयोः विद्याऽविद्ययोश्चः विवेचनं सुकरं खलु भवति । विद्या विनयं ददाति, लक्ष्मीं तनोति, दिक्षु कीर्ति च वितनोति । कल्पतेव विद्या सर्वं साधयति विद्याद्वारैव मानवः प्रगतेः शिखरमारोढुं शक्नोति ।

असंभवान्यपि च वस्तून्यधिगन्तुं पारयति । न किमप्यशक्यं नाम विदुषाम् । विद्यैव मानवोन्नतेमूलमन्त्रः । विद्यां श्लाघयन्कश्चित्कविः सम्यगाह—

**मातेव रक्षति पितेव हिते नियुङ्क्ते,**
**कान्तेव चाभिरमयत्यपनीय खेदम् ।**
**लक्ष्मीं तनोति, वितनोति न दिक्षु कीर्ति,**
**किं किं न साधयति कल्पलतेव विद्या ।।**

पृथिव्यां शतशो राजानोऽभवन् । तेषामद्य नामापि न श्रूयते । येषां नामाद्य सामान्यजनानां जिह्वासु नृत्यति तत्कस्य साहाय्येन, विदुषां साहाय्येनैव । यदि विद्वांसस्तेषां यशोगाथाः स्वपुस्तकेषु नाङ्कयन्ति स्म तदा तेषां नामापि विस्मृतिगर्भे नूनमन्तर्धत्तेस्म । परं विद्यावतस्तु स्वरचनाभिरमरत्वं भजन्ते । जीवनकालेऽपि तेऽप्रतिमं सम्मानं विपुलां कीर्तिञ्च लभन्ते । वाल्मीकिवेदव्यासकालिदासप्रभृतीनां नाम को नु विसस्मार ? को वा विस्मरिष्यति ?

नृपतिः शक्त्या प्रजानां शरीराणि शास्ति, विद्वांस्तु स्वप्रतिभायाश्चमत्कारेण तेषां हृदयानि वशीकरोति । केनचिल्लोभेन स्वार्थेन च वशीभूता एव मानवो राजान पूजयन्ति सत्कुर्वन्ति च । सिद्धे स्वार्थे पूजायाः सत्कारस्य च भावो विलुप्यते । परं विचक्षणान् जना निःस्वार्थभावेन पूजयन्ति, विश्वसन्ति च । एव सिध्यति यद् विदुषां पूजाऽनश्वरा खलु । इतिहासोऽप्यस्य साक्षी यद्विदुषां सत्कारः सर्वाधिकः खलु । श्रीरामो मुनि वशिष्ठमपूजयत् । सरहस्यानि जृम्भकास्त्राणि च तमुपसक्रान्तानि । तानि ताडकावधे प्रयुक्तान्यार्येण । चन्द्रगुप्तोऽपि चाणक्यस्य पूजामकरोत् तस्मान्नन्दवश समूलमुन्मूल्य राजश्रिया वरणमकरोत । महाराजः शिवराजोऽपि स्वगुरुरनुकम्पयाऽप्रतिमं शौर्यमलभत। अवरङ्गजेबस्य स महतीं शिरोवेदनामजनयत् । अद्यापि हिन्दुधर्मावलम्बिनस्तं शिरसा प्रणमन्ति । तस्य साहसिककार्याणि स्मारं स्मारं ते स्फूर्ति प्राप्नुवन्ति । गुरुद्रोही दुर्योधनः सपरिवारं विनष्टस्तस्य राज्यञ्चापगतम् । गुरुभक्तोऽर्जुनस्तेषामनुग्रहेण रिपून्हत्वा राज्यं निष्कण्टकमकरोत् । दृष्टं भवद्भिर्यद्विद्वांसः पुजार्हाः खलु । तेषावहेलना कदापि न कार्या ।

एका जनश्रुतिरप्येतत्सम्बन्धिनी अनुश्रूयते । कविवरः कालिदासः स्वपुत्रमेतदधस्तनं पद्यमध्यापयति स्म—

**विद्वत्त्वं च नृपत्वं च नैव तुल्यं कदाचन ।**

**स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते ।।**

तत्रासीनेन महाराजविक्रमादित्येन यदैषः श्लोकः श्रुतस्तदा तेन स्वगत चिन्तितमहो ! धाष्ट्र्यं कालिदासस्य यन्मम वैभवोपरि आमोदप्रमोदं

कुर्वन्नयं सम्मुखीनं मां गर्हते। अतो नीरक्षीरविवेकाय स्वदेशादस्य निर्वासनमेवोचितम्। अनेन कालिदासः स्वदेशान्निर्वासितः। कविकुल-गुरुः कालिदासो यत्र गतस्तत्राधिकतरं राज्यसम्मानमलभत्। कतिपय-दिवसानन्तरं विक्रमादित्यः कालिदासं विना विषण्णवदनोऽभवत् तम-न्विष्यन् स तस्मिन्नगरे आगच्छत् यत्र कालिदासो विराजते खलु। क्षुत्क्षामकण्ठो विक्रमादित्य एकमनर्घं रत्नं विक्रेतुं रत्नशालायां प्रविष्टः। प्रच्छन्नवेशं विक्रमादित्यं चौरं मत्वा रत्नाजीविना स कोट्टपालाय समर्पितः।

कोट्टपालस्तं राजसभायामानयत्। तत्र कालिदासं स्वर्णसिंहासने विराजन्तमवलोक्य लज्जावनतमुखो विक्रमादित्यः स्वस्खलितमनुभवत् मुक्तकण्ठेन च 'विद्वान् सर्वत्र पूज्यते' इत्यस्य सत्यतामुद्घोषयत्।

किम्बहुना विद्वत्वं हि अक्षयधनम् इदं खलु सर्वाधिकं धनम् सर्वदा स पुष्णाति। कीर्ति, धनं, नैतृत्वं च प्रयच्छति। अतो विद्वत्त्वस्य पूजा सत्या पूजा, अन्यस्य तु मिथ्यैव। अतः सुऽठु आह कश्चित्कविः।

**विद्वत्वं च नृपत्वं च नैव तुल्यं कदाचन।**
**स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते॥**

## १७. बुद्धिर्यस्य बलं तस्य

मानवः शारीरिकबलेन पशुभिर्हीनः खलु। आयुधं विना हिंस्रपशु-भिरात्मानं स रक्षितुमपि न प्रभवति। पशवस्तु जन्मकालादेव स्वाव-लम्बिनः सन्ति। मानवस्तु परावलम्बिनः। मनुज शिशुरेकहायनाऽच-लायामवक्रः स्थातुं क्षमः। श्वापदशिशुर्जन्मकालादेवेतस्ततः कूर्दते धावति च। शिक्षणं विना मानवो नदीतरणमपि कर्तुं न प्रभवति। पशवस्तु श्रम विनैवास्यां कलायां दक्षाः। तथापि मानवोऽद्य शेषसंसृतेः शासकः सः कृतस्नं विश्वमधिशेते। स्वल्पबलोऽपि मानवोऽद्य प्रकृतेर्नियन्ता पञ्च-भूतान्यहर्निशं ते सेवन्ते। कस्य सहाय्येन स इदं कर्तुमपारयत्? शारी-रिकबलस्य केवलस्य? नहि नहि बुद्धिर्बलस्य धन्या खलु मानवस्य

शेमुषी यया विभूषितः सोऽद्य जगन्नियन्तारं सर्वशक्तिमन्तं प्रभुमप्याह्वयते । आधुनिका वैज्ञानिकास्तु स्वप्रज्ञाबलेन स्थलजलाकाशप्रदेशान्विजित्याऽधुना खलोकमपि विजेतुं प्रयतमानादृश्यन्ते । ते खलु चन्द्रलोकेऽपि वसतिं कर्तुं प्रयतन्ते । इत्थंमिदं निर्विवादमेव यज्जगत्यां बुद्धिरेव सर्वाणि कार्याणि साधयति । यदि धिषणाशून्याः केवलमुत्साहयुक्ता नेतारो भवेयुस्तदा 'अन्धेनेव नीयमाना यथाऽन्धाः' सर्वे मनुष्या अन्धकूपे पतेयुः । बुद्धिर्हि महदुपकरोति । तां विना मनुष्यस्य नास्ति किमपि मूल्यम् । तया हि मातेवान्यजीवधारिणः स्ववशे करोति । अतः सिध्यति यच्छारीरिकबलाद्बुद्धिबलमतिरिच्यते ।

विशालकायो बलिष्ठो मानवो यदि बुद्धिरहितस्तदा स यथेच्छं फलं न प्राप्नोति । सुकर्मणि पापकर्मणः अधर्मे धर्मस्य, असत्ये सत्यस्य भ्रान्त्या तस्याधःपतनं निश्चितमेव । बुद्धिमास्तु धर्माधर्मयोः सत्यासत्ययोः, पापपुण्ययोः कर्त्तव्याकर्त्तव्ययोश्च तत्त्वमधिगम्य स्वयं सन्मार्गं चलयानपि नीतिरीतिपथे चालयति । मानवः स्वबुद्धिकौशलेन श्वापदानपि पालयति शिक्षयति च तान् विविधाः क्रीडाः । मेधावी पुरुषस्तु शासकेषु अपि शासनं करोति, पण्डितानपि शिक्षां ददाति, धनिकानपि स्ववशं नयति । बुद्ध्या हि पवनसुतेन हनुमता लोकोत्तरमपि कार्यं साधितम् । बुद्धिवलेनैव स्वल्पानीकाः पाण्डवाः कौरवान् पराजयन्त । पञ्चतन्त्रस्य सिंहशशककथाऽप्यस्य निदर्शनं यत्स्वल्पबलोऽपि शशको मतिमान्बलवन्तं सिंहमनायासेनैव व्यापादयति स्म । बुद्धिरहितो विद्यालंकृतोऽपि पुरुषो मूर्ख एव । पञ्चतन्त्रस्य मूर्खपण्डितानां कथाऽपि बुद्धिबलस्य महत्त्वं सूचयति । महात्मना गान्धिनाऽपि बुद्धिबलेन विदेशीयैः शासकैः निगडिता भारतमाता बन्धनमुक्ता कृता ।

महानस्ति खलु बुद्धिप्रभावः । बुद्धिमन्तोऽस्मिल्लोके कीर्तिं लब्ध्वा परलोकेऽपि परमं पदं प्राप्नुवन्ति । बुद्धिहीनस्य तु धिग्जीवितम् । स किमपि कार्यं साफल्येन कर्त्तुं न प्रभवति । तस्यैश्वर्यमपि मतिमानुपभुंक्ते । तस्य बलमप्यन्येषां कार्याणि सम्पादयति । बुद्धिशून्या बलिष्ठा अपि बलरहिता जायन्ते । ससहायका अपि सहायकरहिता एव । सहस्रशः

सैनिका यानि कार्याणि कर्त्तुं न क्षमास्तान्येव धीमान्स्वबुद्धिप्रभावेण साधयति । तस्य समक्षेऽस्त्रवतामस्त्राणि आयुधिकानामायुधानि च सकलानि विफलीभवन्ति । बुद्धिरेवैतादृशमेकमात्रं प्रहरणं यत्कुत्रापि निष्फलतां न भजते । शेमुषी हि बह्निरिव ज्वलयति परं धूमं नोत्थापयति । बाण इव विध्यति परं रुधिरं न निष्कासयति । अतो बुद्धिबलस्य चमत्कारोऽक्षुण्ण एव । वेदेऽपि बुद्धेः प्रभावो मुक्तकण्ठेनाङ्गीकृतः ।

'तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ।'

इत्थं हि सिध्यति यत्प्रज्ञा हि महद् धनम्, प्रबलं बलम् सर्वसिद्धिनिधानम्, सर्वकार्यनिदानम् । अतः सुष्ठुरुक्तं नीतिकारेण—

**बुद्धिर्यस्य बलं तस्य निर्बुद्धेस्तु कुतो बलम् ।**
**पश्य सिंहो मदोन्मत्तः शशकेन निपातितः ।।**

# १८. महात्मा गान्धी

श्री गान्धिनो जगतो महापुरुषेषु गणना श्रेष्ठतमरूपेण भवति भविष्यति चैव । सत्यस्य अहिंसायाश्च सन्देशस्तेन पीडिताय संसाराय प्रदत्तः । स एतादृशः प्रकाशस्तम्भ आसीद् यः स्वकीयेन सात्विकप्रकाशेन पूर्वाशां पश्चिमाषां च द्योतितवान् । श्रीगान्धिनश्चरणचिह्नानि जगद् बहुकालपर्यन्तमनुसरिष्यति ।

श्रीगान्धिनो जन्म १८६९ तमे ख्रिष्टाब्दे सौराष्ट्रान्तर्गतपोरबन्दरनाम्नि नगरेऽभवत् । अस्य पिता श्रीकर्मचन्दो गान्धी राजकोटनगरस्य प्रधानमन्त्री आसीत् । श्रीगांधीनां वास्तविकं नाम मोहनदास इत्यस्ति ।

राजकोटनगरे विद्यालयपरीक्षामुत्तीर्य मोहनदासो विधानपरीक्षामुत्तर्तुम् इङ्गलैंडनामकं देशं गन्तुमवाञ्छत् तस्य धर्मभीरुर्माता कथमपि न तदनुमेने । ततस्तेन मातुः पुरतो मांसादिग्रहणपरिहारस्य प्रतिज्ञा कृता । इत्थं जननी माश्वास्य स इङ्गलैंडनामकं देशमगच्छत् । तत्र च विधांनपरीक्षामुत्तीर्य स भारतं प्रत्यागच्छत् । वावकीलरूपेण चात्र कञ्चित्कालं कार्यमकरोत् । ततश्चाफ्रीकावासिभिः कतिपयैः श्रेष्ठि-

भिराहुतः स तत्र गतः। तत्रत्यांश्च भारतीयान् दुर्दशापन्नानवलोक्य तेषामुद्धाराय सत्याग्रहादिद्वारा प्रायतत।

१६१५ तमे खिस्ताब्दे भारतं प्रतिनिवृत्य स कांग्रेसं प्रविवेश। १६२४ तमे खिस्ताब्दे महात्मा गान्धी बेलग्रामकांग्रेसमहासम्मेलनस्य सभापतिपदमलञ्चकार, तत्पश्चात्स देशस्य प्रत्येकभागस्य भ्रमणञ्चाकरोत्। ग्रामोद्धारस्य, हरिजनोद्धारस्य खादीप्रचारस्य च महत्त्वमनुबभूव। महात्मनो जीवनस्य शेषभाग एषु प्रचारकार्येषु व्यतीतः स्वतन्त्रतासंग्रामस्य च सोऽप्रतिमः सेनानीआनीत्। असहयोगान्दोलनं राजनीतिक्षेत्रे नीत्वा महतीं क्रान्तिं सोऽजनयत्। १६२० तमात् खिस्ताब्दाद् १६२२ तमं खिस्ताब्दं यावदसहयोगान्दोलने स महतीं सफलतां लेभे। परमसहयोगक्षोभो यदा हिंसापथम् आरूढ़स्तदा तेन स परकालं तावत्परित्यक्तः १६२२ तमात् खिस्ताब्दादारभ्य १६२४ तमं खिस्ताब्दं यावत्स कारागारे न्यवसत्। १६३० तमात् खिस्ताब्दात् १६३२ तमं खिस्ताब्दं यावत्स पुनरसहयोगान्दोलनं प्रारब्धवान्। गौरांगैश्च स पुनर्बन्दीकृतः। इतो मध्ये १६३१ तमे खिस्ताब्दे इङ्गलैंडनामकदेशे गोलमेजकान्फ्रेन्से भागं जग्राह।

१६४२ तमे खिस्ताब्दे 'भारतं त्यजत' इत्यस्य क्षोभस्य परिचालनात्पुनः स कारागारे निरुद्धः।

१६४७ तमे खिस्ताब्देऽगस्तमासस्य पंचदशतारिकायां भारतस्वातन्त्र्यस्यारुणोदयोऽजायत्। युगेभ्यो दासतायामाबद्धः भारतः पुनः स्वतन्त्रताया वातावरणे निशश्वास। स्वतन्त्रतायाः संग्रामेऽस्मिन् यैर्देशभक्तैराहुतात्मभिर्भागोऽग्राहि तेषु महात्मनो गान्धिनो नाम सर्वप्रथममास्ते।

महात्मा गान्धी युगपदेव राजनीतिकनेता समाजसुधारकश्चासीत् अहिंसायाः, सत्यस्य, प्रेम्णश्च सिद्धान्ता आदर्शपूर्णाः सन्तोऽपि व्यावहारिकाः सन्तीति स निजजीवनेनैव निर्दर्शितवान्। तस्य सिद्धान्तानां महिमा न केवलं भारतेऽपि तु सकलेऽपि जगति साम्प्रतमवबुध्यते, तेषां चानुसरणाय जगत्प्रयतते।

अयं विश्ववन्द्यो महात्मा स्वातन्त्र्याधिगमात्कतिपयमासानन्तरमेव भौतिक शरीरमत्याक्षीत्। १९४८ तमे ख्रिष्टाब्दे जनवरीमासस्य त्रिंशत्तमे दिवसे यदाऽयं राष्ट्रपिता विरलाभवने प्रार्थनासभाया गच्छन्नासीत्, तदा नाथुरामनामा कश्चित्पुरुषोऽस्य मृत्युकारणमभवत् अस्य निधनं समाचारं श्रुत्वा सकलसपि जगत् शोकनिमग्नं समजायत् सर्वेषां देशानां राष्ट्रध्वजा अवानम्यन्त अस्य सम्माने। अन्येद्युः यमुनातटेऽस्य राष्ट्रपितुर्दाहक्रिया जाता। असंख्यैश्च नरनारीभिरन्तिमः श्रद्धाञ्जलिरस्मै महामानवायार्पितः।

पण्डितनेहरुणा तस्मिन्नवसरे प्रकटिता अधोलिखिता उद्‌गारामहामनोऽस्य महिमानं गरिमाणं चावगमयितुं पर्याप्नुवन्ति—

विशालच्छायमूर्तिवद् राष्ट्रपिताऽयमस्याः शताब्द्या अर्धभागेऽधुनाऽपि जीवंस्तिष्ठति। परमियं मूर्तिराध्यात्मिकी अस्ति न खलु भौतिकी। तस्य महिमानमस्माकं चक्षूंषि न स्पष्टतया द्रष्टुमलम्। आगमिन्यः सन्ततयः सम्भवतस्तं स्फुटतया न द्रष्टुं पारयेयुः कथमेतादृशो मानवः संसारे जनिं लेभे इति साश्चर्यं प्रकटयेयुः।

## १९. पण्डितजवाहरलालनेहरुः

स्वतन्त्रभारतस्य मान्यः प्रधानमन्त्री पण्डितजवाहरलालनेहरुरस्य विश्वस्य महती विभूतिः। विश्वराजनीतेः रङ्गमचेऽपि नेहरोः स्थानं गौरवमयं प्रतिष्ठापूर्णं च विद्यते। दृढताया भावकतायाश्चारस्य प्रतीकस्याग्रे श्रद्धया मस्तकं स्वयमेव नम्रीभवति। न हि केवलं भारतवर्षस्यायमादर्शः कर्णधारः परं विश्वशान्तेरप्यग्रदूतः।

श्रीमोतीलालनेहरुः प्रयागस्य प्रख्यातनामा वाक्कील आसीत्। पण्डितनेहरुस्तस्य योग्यपितुर्योग्यः पुत्र आस्ते। श्रीमोतीलालनेहरुमहीयस्या सम्पत्या महत्या च समृद्धया राजा इव जीवनयापनमकरोत्। पण्डितजवाहरलालोऽस्मिन् संस्कृतेऽर्थ प्रचुरे च वातावरण उत्पन्नः। बाल्यकालादेवास्य मनसि महान्त आदर्शवन्तश्च संस्काराः पदं चक्रिरे।

अस्मिन्मनोरमे वातावरणे तस्य स्वाभाविक्याः प्रतिभाया वाञ्छनीया प्रगतिरभवत् । तस्य प्रारम्भिकी शिक्षा गृहे एवाभवत् । यदाऽयं पञ्चदशवर्षीयस्तदाऽसाविङ्गलैण्डनामके देशेऽध्ययनाय प्रेषितः तत्र हौरोस्कूलाद् विद्यालयपरीक्षामुत्तीर्य कैम्ब्रिजविश्वविद्यालयान्तर्गते ट्रिनिटिमहाविद्यालये प्राविशत् । तत्रत्यां परीक्षामुत्तीर्याऽसौ लण्डननगर्या विधानपरीक्षामपि उदतरत् । ततोऽयं भारतं प्रत्याजगाम । पितुर्विशालो न्यायव्यवसायस्तस्मै नारोचत । भारतजननी विदेशीयबन्धनैः कथं विमुक्ता भवेदियमेव समस्याहर्निशं तस्य शिरोवेदनामकरोत् । महात्मा गाँधी अपि एतस्मिन्नन्तरेऽफ्रीकायां सत्याग्रहादिद्वारा विजयलक्ष्म्यावरणं कृत्वा भारतं न्यवर्तत्

प्रथममहायुद्धे ब्रिटिशसर्वकारः "रौलट एक्ट" नाम दमनकारि विधानं भारतीयानाम् पुरतः प्रास्तौत् । तद्विरोधाय श्रीमोहनोऽसहयोगसत्याग्रहमारभत । महात्मनो गान्धिनोऽसहयोगान्दोलने स्वपित्रा सहैव जवाहरलालोऽप्यकूर्दत । एवं च वैभवस्यामोदकरं मनमोहनं चाकर्षणं शाश्वतकालाय परित्यज्य देशस्यायं महान् पुत्रः राष्ट्रसेवायामात्मानं नियोजयामास, राष्ट्रं च पराधीनतापाशैर्विमोक्तुं तनुमनोधनैः प्रायतत । भारतीयस्वतन्त्रतासंग्रामस्यासावप्रतिमो योद्धा । पञ्चविंशतिवर्षीये दीर्घकालीने संघर्षे सोऽग्रणीः । पं० मोतीलालनेहरूः प्राक्तस्य विचारधारायाः प्रबलो विरोधी आसीत् । परं कियतकालानन्तरं सोऽपि पूर्णं सहयोगमददात ।

राष्ट्रस्याह्वानमाकर्ण्य अष्टवारानयं युवकहृदयसम्राट् कारागारवासं स्वीचकार । कतिपयवारं च भारतीयजनता इमं प्रियनेतारं कांग्रेसमहासम्मेलनस्य सभापतिपदप्रदानेन सभाजयाभास । राष्ट्रस्यायं लोकप्रियो नेता स्वातन्त्र्यात्पूर्वमपि मुकुटरहितो भारतसम्राट्' इति ससम्मानमभिधीयते स्म ।

१९३० तमे ख्रिष्टाशब्दे जनवर्याः षड्विंशे दिनेऽयमिरावत्यास्तटे लवपुरे स्वातन्त्र्यस्य महतीं घोषणामकरोत् । स्वतन्त्रतायाश्चिह्नं तिरगं

ध्वजं तत्र निचखान । श्रीनेहरोर्निर्भीकतायाः स्वतन्त्रव्यक्तित्वस्य च एतदतिरिक्तानि अन्यान्यापि बहूनि निदर्शनानि सन्ति ।

श्रीनेहरुः राजनीतिक्षेत्रेऽतिरिक्तो महान् वक्ता प्रशस्तलेखकश्चापि वर्तते । अस्यार्थगम्भीरा प्रभावशालिनी वक्तृताऽनुपमा खल्वस्ति । तस्य आकाशवाण्या प्रसारितानि भाषणानि भारतीयानां हृदयेषु विद्युत इव सञ्चरन्ति । श्रीगान्धिनो निधनेऽसौ प्रयागे दशलक्षाणां श्रोतॄणां समक्षे भाषणमकरोत् । विश्वस्येतिहासे नहि केनचित्तावत्संख्याकानां लोकानां समक्षेऽद्यपि भाषणं दत्तम् । किम्बहुनाऽन्यनेको नेता यस्य भाषणं श्रोतुं न केवलं भारतीयानामपि तु विश्वस्यापि कर्णविवराणि शश्वदुत्सुकानि भवन्ति ।

श्रीनेहरुविश्वस्य महान् लेखकः खलु । एतदीया 'डिस्कवरी ऑफ इण्डिया', 'भारतेति वृत्तम्', 'ग्लिम्प्सेज ऑफ वर्ल्ड हिस्ट्री', 'विश्वेतिहास दर्शनम्', 'आत्म कथा' चेति ग्रन्था एनं विश्वलेखकरूपेण प्रतिष्ठापयितुमलम् ।

श्रीनेहरोर्व्यक्तित्वं सौम्यमाकर्षकं प्रभावशालि चास्ति । अयमाकृत्या तेजस्वी प्रकृत्या च भावुको वर्तते ।

अद्यत्वेऽपि श्रीनेहरूः भारतीयगणराज्यस्य प्रधानमन्त्रिपदं परिपूर्णया योग्यतया निर्वाह्यति ।

स्वतन्त्र्याधिगमनानन्तरं जगद् यद् गौरवमयं सम्मानं भारतीयप्रदात्तस्य महच्छ्रेयः श्रीनेहरुं गच्छति । ●

## २०. मम जीवनस्य लक्ष्यम्

जगदेका प्रवहमाना नदीवाऽस्ति । अस्यां मानवः जलधारावन्नजाने क्रियत्कालात्प्रवहते । तस्यां ममास्तित्वं विन्दुतुल्यम् तथापि यथा मानवमात्रस्य कोऽपि महान् अभिलाषो वर्तते ममापि कश्चिन्मनोरथोऽस्ति । अहमपि स्वजीवनं सफलीकर्त्तुमिच्छामि ।

केचिद्धनोपार्जनमेव जीवनस्य लक्ष्यं मन्यमानास्तस्मिन्नैव दत्तमनसा जायन्ते। केचिद् विद्यामेव पूजायाः कारणं मन्यमानास्तत्रैव यतन्ते, केचिज्जगति येन केनापि प्रकारेण प्रसिद्धिमधिगन्तुमिच्छन्ति। केचिद् राजनीतिक्षेत्रे ख्यातिं प्राप्य प्रधानमन्त्रिपदं राष्ट्रपतिपदञ्चाधिगन्तुं कामयन्ते केचिन्मल्लयुद्धे पारंगतो भवितुमाकांक्षन्ति, केचिच्चलचित्रेऽभिनेतृपदमाशंसन्ते अन्यान्यपि बहूनि उद्देश्यानि भवितुमर्हन्ति मानवानाम्। केचिल्लक्ष्यविहीना जीवनं यापयन्ति।

ममापि कदाचिदुक्तेषु लक्ष्येषु किञ्चल्लक्ष्यं स्यात्। अथवा लक्ष्यविहीन एव जले प्रवहमानंतृणवज्जीवनयापन कुर्याम्। परं कस्यचित्कवेः कविता मम जीवनधारां पर्यवर्त्तयेत्। तस्यां कवितायां पुष्पं निजभिलाषं वर्णयन् कथयति। ममेयमाकांक्षा नास्ति यदहं देवबालानां भूषणेषु गुम्फेयम्, ममेयमप्यभिलाषा नास्ति यदहं प्रणयिजनानां मालासु सूत्रयेयम्, ममेयमपि कामना नास्ति यदहं राज्ञां किरीटेषु शोभेयम्, मम तु इयमेव वाञ्छा अस्ति यतहि मालाकार! मामुत्पाठ्यतस्मिन्मार्गेप्रक्षिप यस्मिन् पथि अनेके वीराः मातृभूमेः सम्मानरक्षणार्थं प्राणान् करतलेषु निधाय गच्छन्ति। तया कवितयऽहं विशेषरूपेण प्रभावितोऽस्मि। चकितगात्रोऽमहचिन्तयम्—"यद् देशभक्तानामेतावन्महत्वम्। एतादृशा वीरा यस्यां भुवि उत्पन्नाः सा धन्या। अधुना मम जीवनस्य लक्ष्यं मातृभूसेवाऽस्ति। अहं तु स्वदेशमानसस्य मराल एवास्मि—

> **अस्ति यद्यपि सर्वत्र नीरं नीरजमण्डितम्।**
> **रमते न मरालस्य मानसं मानसं विना॥**

## २१. छात्राणां कर्त्तव्यानि

मानवजीवने गुरुतमं सौख्यं विद्यार्थिजीवन एव लभते। चिन्ता राक्षसीभीत्वाऽस्मिञ्जीवने न प्रविशन्ति। हर्षविह्वलानां छात्राण कूर्दमानं समूहं दृष्ट्वा कस्य चित्तं न स्पृहयतेऽस्य जीवनाय। तथापि छात्राणां कानिचित्कर्तव्यानि सन्ति। यतो ही विद्यार्थीजीवनमागामि जीवनस्य मूलम्।

विद्याध्ययनं हि छात्राणां मुख्यं कर्त्तव्यमस्ति। परं शरीरस्य, मस्तिष्कस्य, मनसः आत्मनश्च विकासोऽप्यनिवार्यः। एषां मध्ये एकस्याप्यविकासो न समुचितः यतो वास्तविकं विद्याध्ययन विना एषां विकासो न जायते।

आलस्यं छात्राणां महान् रिपुः। अस्य मधुरं तानं श्रुत्वा छात्रास्तन्द्राधीनाः सन्तः स्वकीयममूल्यं समयं वृथा यापयन्ति। इत्थं ते स्वलक्ष्यं प्राप्तुं न प्रभवन्ति। विद्यार्थिजीवनस्य प्रत्येकं क्षणमनर्घमस्ति। तस्य वृथा यापनेन लक्ष्यप्राप्तिः कथं संभवति। कश्चिद्विचारक आह—

**सुखार्थिनः कुतो विद्या विद्यार्थिनः कुतः सुखम्।**

वाक्चापल्यं चलचित्रदर्शनं च विद्यार्थिजीवनं सर्वथा विनाशयतः। इन्द्रियाणां निग्रहणमपि छात्रैः कर्त्तव्यम्। इन्द्रयैः पराजिताश्छात्राः कदापि साफल्यं नाधिगच्छन्ति। तपश्चरणमेव विद्यार्थिजीवनस्य मूलमन्त्रम्। विश्वस्यानेकेषां महापुरुषाणां विद्यार्थिजीवनं तपश्चरणस्य निदर्शनम् सौख्यैर्विताडितैरपि तैर्महता क्लेशेन विद्योपार्जिता। गुरुभक्तिरपि विद्यार्थिजीवनस्यानिवार्यमङ्गम्। गुरुभक्तिं विना न कोऽपि छात्रो विद्योपार्जनं कर्तुं क्षमः। अर्जिताऽपि तस्य विद्या साफल्यं न लभते। कश्चित्कविराह—

**गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा।**
**अथवा विद्यया विद्या चतुर्थं नैव कारणम्॥**

गुणग्राहिताऽप्यन्तेवासिनामप्रतिमं भूषणम्। गुणाः सर्वतो ग्राह्याः। मिथ्याऽहंकारमङ्गीकृत्य विद्योपार्जनाद् विमुखाश्छात्राः सरस्वतीं सम्यङ्नाराधयन्ति। पण्डितम्मन्या अन्तेवासिनः कदापि उच्चशिक्षामधिगन्तुं न शक्नुवन्ति। कश्चिद् विद्वानाह—

**यदा किञ्चिज्ज्ञोऽहं द्विप इव मदान्धः समभवम्।**
**तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः॥**
**यदा किंचित्किंचिद् बुधजनसकाशादवगतम्।**
**तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः॥**

मितव्ययिता अपि छात्राणामन्यद् गुरुतरं कर्त्तव्यमस्ति। बहवोऽभिभावकाः प्रेमाभिभूताः सन्ततीनामुच्चशिक्षणार्थं स्वकीयं सर्वस्वं व्ययीकर्तुं सदैव सन्नद्धा दृश्यन्ते। परं विद्यार्थिनस्तेषां धनानि निरनुकोशतया व्ययन्ते। नह्यन्यः कश्चिद् गुरुतरो दुर्गुणोऽस्माद्।

अनुशासननियन्त्रणं समयनिष्ठापुरुषार्थोदारतासत्यवादितानिर्भयतादेशभक्तिविनोदप्रियता प्रभृतिभिर्गुणैरन्तेवासिनां जीवनं स्वर्णवत् चकासितु मर्हति।

## २२. छात्राणामनुशासनहीनता

छात्राणामनुशासनहीनताऽद्य सत्यमेव एका प्रमुखा समस्या वर्तते। सर्वे विचारशीला इदं दृष्ट्वा चिन्ताविह्वलाः सञ्जाता यद्देशस्य भाविकर्णधारेषु इयं प्रवृत्तिः केन हेतुना उत्तरोत्तरं वर्धते। छात्राणां चरित्रनिर्माणस्य त्रीणि साधनानि वर्तन्ते—(१) तेषां गृहम्। (२) शिक्षासंस्थानम्। (३) शिक्षाप्रणाली च।

बहवः संरक्षकाः बालकान् प्रति जागरूकाः सतर्काश्च न भवन्ति। प्रायो बहुलेषु गृहेषु तादृक् संस्कृतं पूतञ्च वातावरणं न वर्तते यादृग्बालानां चरित्रनिर्माणायापेक्षितम्। पदे पदेऽभिभावकानामसत्यभाषणस्य प्रवृत्तिः बालकानपि मिथ्याभाषणे नियोजयते। शिक्षासंस्थाने छात्राणां प्रवेशप्राप्त्यनन्तरं बहवः संरक्षकाः स्वकर्त्तव्यस्येतिश्रियं मत्वा तुष्यन्ति। इयं प्रवृत्तिः महती भयावहा।

शिक्षका अपि छात्राणामनुशासनहीनताया निमित्तम्। ये पाठ्यपुस्तकानि परिसमाप्य सन्तुष्ठा जायन्ते। अन्तेवासिनां शारीरिकमानसिकाध्यात्मिकशक्तीनां विकासाय ते स्वल्पमपि न प्रयतन्ते। अत इदमावश्यकं यदध्यापका आचारप्रधानां प्राचीनशिक्षां छात्रेभ्यो दद्युः भारतीयसंस्कृतिरेवैकमात्रमुपचारश्छात्राणामनुशासनहीनतायाः।

अद्यतना आध्यात्मिकभावनाशून्या अध्यापकवर्गा भौतिकसमृद्धे

स्पृहयन्ते। एतादृशा अध्यापकाश्छात्राणां चरित्रनिर्माणं कर्त्तुं कदाऽपि न प्रभवन्ति।

पुरा आचार्याः स्नातकानुपदिशन्ति स्म—"यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि नो इतराणि।" छात्रैः गुणग्राहिभिर्भवितव्यम्।

वस्तुतस्तु शिक्षकः शिल्पी, राष्ट्रस्य निर्माता च। अस्मिन्बहुव्यये युगे शिक्षका अपि स्वल्पवेतनेनासन्तुष्टाः अतः इदं सर्वकारस्य कर्त्तव्यं यत्स प्रचुरं वेतनं दत्त्वा शिक्षकान् तोषयेत्। अस्याभावस्य पूर्तिं विना छात्राणामनुशासनहीनता कदापि दूरीकर्त्तुं न शक्यते।

पाठचक्रमे शिक्षाप्रणाल्यां चापि परिवर्त्तनमनिवार्यम्। अद्यतनी शिक्षाप्रणाली छात्राणां प्रतिभां कुण्ठति। तेषां व्यक्तित्वस्य विकासोऽप्यनया न भवति।

प्रजाप्रतिनिधिसभायाः सदस्यानामपि अवधानमनया समस्यया आकृष्टम्। तैरेकः प्रस्तावोऽपार्यत यदनुशासनहीनतायाः कारणपरिज्ञानाय एक आयोगो नियोक्तव्यः। अनुशासनहीनताः कारणानि अन्विष्य सन्तुष्ट आयोगस्तु व्यर्थ एव। अस्याः समस्यायाः समाधानमपि तेनान्वेष्टव्यम्।

## २३. कर्मण्येवाधिकारस्ते मा फलेषु कदाचन्

संसारेऽस्मिन् चराचरं सर्वं जगत्किमपि कर्म अवश्यमेव करोति। न कोऽपि चरोऽचरो वा निष्क्रियत्वेन स्थातुं शक्नोति। कर्महीनता मृत्योरपरं नामाऽस्ति। मनुष्यो यावज्जीवति तावत्कर्मतन्तुना बद्धो भवति। अचेतना अपि तरुलतावीरुधादयः कर्मणैव जीवन्ति समृद्धिं च लभन्ते उक्तं च भगवता श्रीकृष्णेन—

**नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्।**
**कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः॥**

वहिरिन्द्रियाण्यवरुध्य ये कर्महीना इत्यात्मनो मन्यन्ते ते भ्रान्ताः। यतो बाह्यात् कर्मणो विरता अपि मानवा मानसिकं कर्म सदा कुर्वन्ति।

मनसो गतिरप्रतिहता । मनः सर्वदैव स्वकर्मणि संलग्नो भवति । सुप्ते ऽपि मानवे तद् दूरं विहरति ।

फलाभिलाषं परित्यज्य शुभकर्माणि कर्त्तव्यानि । गीतायां प्रतिपादितमस्ति यत्फलेच्छया शुभकर्माणि कृतानि श्रेष्ठतां त्यक्त्वा मध्यमता भजन्ते । कर्मफलेच्छा हि कर्मकाष्ठं घुण इव विनाशयति । कर्मफलाकांक्षया मानवः यत्कर्म करोति तत्र फलसिद्धिरेव प्रमुखं लक्ष्यं जायते । एषा प्रवृत्ति र्मानवं स्वार्थमयं करोति । विवेकशून्यः स्वार्थी मानवोऽपरान्पीडयित्वाऽपि स्वार्थं साधयति । धनिकाः प्रसिद्ध्यर्थं धर्मशाला निर्मापयन्ति, पाठशाला उद्घाटयन्ति । परं यदि समाचारपत्रैस्तेषां प्रसिद्धिर्नस्यात्तदा क्रुद्धास्ते घोरे संकटेऽपि विपन्नेभ्यो दानं न दास्यन्ति । एवं फलकामनया कृत भक्तिरपि निष्फला । यत एतादृशा भक्ताः स्वार्थस्य साफल्यार्थं, प्रतिष्ठा प्राप्त्यर्थं च भक्तिमाचरन्ति । स्वार्थसिद्ध्यर्थं तेऽपरान्पीडयन्ति, अत्याचार च कुर्वन्ति । अतः कर्मफलेच्छां त्यक्त्वैव शुभकर्मसु प्रवर्त्तितव्यम् ।

अपरं च, फलोपलब्धिस्तु न निश्चिता सर्वदा । कदाचिच्च फलावाप्तिर्भवति कदाचिच्च नेति प्रतिदिनं दृश्यते । कदाचिच्चाप्रत्याशित फलं लभते । कदाचिच्च प्रतिकूलं कर्म कुर्वन्मानवो मनोवाञ्छितं फल प्राप्नोति । सफलो मानव आनन्दातिरेकेण हर्षस्वनं करोति असफलोऽश्रूणि मुञ्चति । कर्म प्रति चोपेक्षायुक्तो भवति । बहुधा च विपरीतेषु कर्मसु आत्मानं योजयते । एवमन्ततः कुपथानुगामी स दुःखमाप्नोति । अतः फलावाप्त्यर्थं कृतं कर्म कल्याणप्रदम् । 'कर्म' मम प्रकृतिः, मदीयो धर्मः, न तस्य फले ममाधिकारः, इति भावनया यो मानवः कर्म करोति स फलाफलकामनया विमुक्तः सफलतां प्राप्य न प्रसीदति असफलतामवाप्य च नावसीदति । 'कर्म मया कृतं, तस्मिन्नेव मेऽधिकार आसीत्' इति च तन्मनः फलावाप्तिं विनाऽपि तुष्यति । एतादृशो मानवः कुमार्गाच्च विरतः सत्पथे विचरन्नैहिकमानुष्मिकं चानायासेनैवाधिगच्छति कल्याणम् ।

श्रीमद्भगवद्गीतायां भगवान् कृष्णोऽनासक्तं कर्म प्रशंसति ।

अस्यानासक्तियोगस्य एतादृशी सार्थकता यदर्जुन आत्मकर्त्तव्यमार्गमन्व-चिनोत्। अनाशक्तियोगस्य महिमाऽस्मिन् श्लोके स्फुटमभिव्यक्ता—

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।**
**मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि॥**

## २४. संस्कृतभाषाया महत्त्वम्

संस्कृतं पुरा भारतीयानां लोकप्रिया जनभाषा आसीत्। कामं तत्स्याल्लोकभाषा केवलं शिष्टानामेव। यथा आर० जी० भाण्डारकर आह 'न संस्कृतवैयाकरणाः स्वबुद्धयाऽऽविष्कारमात्रामुपस्थापयाञ्चकुर्निजग्रन्थेषु।' रामायणमहाभारतकाले संस्कृतं जनभाषारूपेण प्रचलितमासीत्। वाल्मीकिरिमां गिरं मानुषीति नाम्ना निर्दिशति।

पतञ्जलिर्महाभाष्ये स्फुटं निर्दिशति यद् व्याकरणं न शब्दानुत्पादयति, तत्तु केवलं शब्दापशब्दौ विवेचयति। यथा कश्चिन्मनुष्यो घटार्थं कुम्भकारं प्रार्थयते—'घटं मे कुरु' इति न तथा लोको व्याकरणज्ञं गच्छति—'शब्दं मे कुरु प्रयोक्ष्ये' इति प्रार्थयितुम्।' महाभाष्ये वयं वैयाकरणसूतयोर्मध्ये प्राजितृशब्दमुद्दिश्य संस्कृतगिरि विवादं शृणुमः।

संस्कृतमेवाधुनिकप्रान्तीयभाषाणामेकजननी अस्ति। सर्वास्वपि भारतीयासु बंगालउडियामराठीगुजरातीपंजाबीहिन्दीप्रभृतिषु प्रान्तीयभाषासु आन्ध्रतामिलमलयालमकन्नडादिषु चार्येतरभारतीयभाषासु प्रतिशतकं षष्ठिशब्दाः संस्कृतभाषाया एव सन्ति। एवं संस्कृतमेव प्रान्तीयभाषासु जीवनं संचारयितुं प्रभवति साम्प्रतम्। अस्या ज्ञानादेव प्रान्तीयभाषाणां सम्यग् ज्ञानं भवितुमर्हति।

अधुना हिन्दी भाषा राष्ट्रभाषा सञ्जाता। संस्कृतस्य शब्दकोशो विशालः सम्पन्नश्चास्ति। संस्कृतमेव एकमात्रं हिन्दीभाषां समृद्धां सम्पन्नाञ्च कर्त्तुं प्रभवति। यतो जनती स्तनन्धयां स्वपुत्रीं लालयती पालयति च।

संस्कृतस्य व्याकरणमप्यप्रतिममस्ति। अस्य व्याकरणस्य शब्दरचनाशक्तिरपूर्वाऽऽस्ते। यथा आङ्गलभाषा लेटिनतः शब्दानङ्गीकृत्याऽऽत्मानं भरति तथैव हिन्दीभाषाऽपि संस्कृतभाषायाः शब्दान् गृहीत्वा निजशब्दराशिप्रवर्धनेनात्मानं सम्पन्नासमृद्धां च कर्तुं पारयति।

भाषाविज्ञानस्य सम्यग् ज्ञानार्थं संस्कृतस्य ज्ञानमनिवार्यम्। अतो भाषाविज्ञानदृष्ट्याऽपि संस्कृतमद्यमहत्त्वपूर्णं स्थानमधितिष्ठति। समालोचनाशास्त्रस्यापि। सम्यग् विवेचनं संस्कृतस्य ज्ञानं विना को नु कर्तुं शक्नोति? भारतीयपुरातत्त्वविद्यार्थिने तु संस्कृतस्य ज्ञानमनिवार्यं वर्तते। यतः प्राचीनाः शिलालेखाः संस्कृते लिखिताः सन्ति। प्राप्ययूरोपीयं (Indo-European) भाषाणां सम्यक्परिशीलनाय संस्कृतभाषापरिज्ञानमनिवार्यम्। साहित्यदृष्ट्याचापीयं भाषा समृद्धा सम्पन्ना चास्ति।

संस्कृतभाषाया इदमन्यद् गुरुतरं वैशिष्ट्यमस्ति यदस्यामेकस्य शब्दस्यानेके समानार्थाः सन्ति। इदं वैशिष्ट नह्यन्यत्र दृश्यते। अस्या व्याकरणमप्यनुपमम्। एतच्च प्रमाणयति यत्परः सहस्रवर्षेभ्यः प्रागपीयं भाषा चरमां समृद्धिभजत। अस्या वैज्ञानिकवर्गीकरणेनापीदं प्रमीयते।

नहि केवलमस्मदीया धर्मग्रन्थाः संस्कृते लिखिताः सन्ति, परं जैनानामपि ग्रन्थाना बहुलोऽशः संस्कृतभाषायामेवास्ते। बौद्धा अपि पालीभाषाया मोहं परित्यज्य संस्कृतमन्वसरन्। विदेशेष्वप्यस्या महान्प्रचारः पुरा आसीत्। यवद्वीप (Java), सुमात्रा (Sumatra), बकुलद्वीप (Borneo), सुवर्णद्वीप (Malaya), बलिद्वीप (Bali), कम्बुज (Combodia), ब्रह्मदेश (Burma) प्रभृतिषु सुदूरपूर्वदेशेषु संस्कृतस्य सार्वत्रिकः प्रचार आसीत्। चम्पानिवासिनो रामायणमहाभारतकौटिल्यार्थशास्त्रनारदीयधर्मशास्त्रभारतीयदर्शनप्रभृतिभिः सम्यक्पुरा परिचिता आसन्। एतेषां देशानां शिलालेखा अप्यस्मदीयकथनस्यानुत्तमानि प्रमाणानि सन्ति।

एवं संस्कृतभाषाया महत्त्वं सर्वैर्विदितम्।

# २५. भारतीया सभ्यता

मनुष्यो विकासाय सर्वेभ्यः प्राणिभ्योऽधिकः प्रयत्नशीलोऽस्ति। बुद्धिविवेकाभ्यां सः सर्वेभ्यः प्राणधारिभ्यः श्रेष्ठः। अन्येभ्यो जीवधारिभ्य इव न सः पूर्णरूपेण प्रकृत्यधीनः। प्रकृतिप्रदत्तैः सौख्यैरसन्तुष्टः सोऽन्यानि सुखान्यमार्गयत्। अद्यतनीयानि विज्ञानान्यस्य साक्ष्यम्। वैज्ञानिकाविष्काराणां साहाय्येन स्थलजलाकाशप्रदेशान्विजित्याऽधुना मानवः खलोकमपि विजेतुं प्रयतमानो दृश्यते। स खलु चन्द्रलोकेऽपि वसतिं कर्तुं प्रयतते। एवं वैज्ञानिकाविष्काराणां साहाय्येन मनुष्येण या भौतिकानामामोदप्रदपदार्थानां प्रगतिः कृता सा सभ्यतायामन्तर्भवति। मानसिकात्मिकप्रभृतीनां शक्तीनां यो विकासो मनुष्येण कृतः स संस्कृतावन्तर्गच्छति। यस्य राष्ट्रस्य संस्कृतेः प्राणशक्तिरप्रतिमा समुन्नता चास्ति, तदेव राष्ट्रं जीवितराष्ट्रेषु गण्यते।

भारतीया संस्कृतिर्भारतस्य पारस्परिकाणामादर्शविचाराणां चिह्नमस्ति। इयं भारतराष्ट्रस्य तान् सिद्धान्तान् प्रकाशयति यैर्भारतवासिनश्चिरादेकतायाः सूत्र आबद्धाः सन्ति।

सभ्यतादृष्टचा भारते विविधाचारविचारसंस्काराणां समूहो दृश्यते। परं संस्कृतिदृष्टचा इयं विविधता न लक्ष्यते। इत्थं भिन्नतायामपि अभिन्नता भारतीयसंस्कृतेः प्रथमा विशेषता अभिदृश्यते।

भारतीयसंस्कृतेरप्रतिमा विशेषताऽस्या आध्यात्मिकता। मानवजीवनस्य चरमं लक्ष्यं निर्वाणप्राप्तिरस्ति। सर्वं खल्विदं ब्रह्म' इति भावनया प्रेरितो भारतीयः प्राणिमात्रे ब्रह्मणो ज्योतिः पश्यति। अनेनाध्यात्मिकचिन्तनेनानुप्राणितः सः सहिष्णुः सञ्जातः। इदमेव कारणं यद् भारतीयो न कदापि केनचिदपि अन्यधर्मावलम्बिना सह कलहमकरोत्। भगवतो बुद्धस्याप्यवतारमध्ये गणनाऽस्य साक्ष्यम्। इयं सहिष्णुता भारतीयसंस्कृतेरद्यावधि विद्यमानतायाः कारणम्।

भारतीयसंस्कृतिः प्राचीनत्वदृष्टचाऽपि महत्त्वपूर्णा खलु। इयं

तावत्संसारस्य प्राचीनतमसंस्कृतिष्वेकतमा विद्यते। यवनमिश्रसुमेरादि-संस्कृतयः स्मृतिशेषा एवाद्यत्वेऽवलोक्यन्ते। परमियं भारतीयसंस्कृतिः संघर्षान् जयन्ती, विरोधिनीः शक्तीरात्मसात्कुर्वती चकास्तितमाम्।

भारतीयधर्मदर्शनयोरप्रतिमेन गौरवेण भारतीया संस्कृतिरद्यापि अपूर्वया प्राणशक्त्याऽऽपूरिताऽस्ति। भारतीयसंस्कृतेरविच्छिन्ना धारा धर्मदर्शनयोर्माध्यमेनैवाद्यापि अस्माकं पुरतो वेगेन पूर्णतया च प्रवहति। धर्मसंस्कृत्योर्महदन्तरमन्वभूयत अत्र। द्वावपि तावद् आध्यात्मिकचिन्तन-मूलौ स्तः।

भारतीयसंस्कृतेरनुपमा विशेषता तस्याः स्वीकरणशक्तिरस्ति। अन्याऽपि सांस्कृतिकधारा अस्या संस्कृतेर्धारया संगता क्रमशश्च विलीना अस्या वेगवत्यां धारायाम्। यवनाः, शकाः, कुशाणाः, हूणाः, सर्वे स्व-संस्कृतिभिः सार्धमागताः। परं भारतीयसंस्कृतेः समक्षं तेषां संस्कृतयो मन्दजवा अजायन्त क्रमशश्च व्यलीयन्त भारतीयायां संस्कृतौ।

भारतीया संस्कृतिरन्यासां संस्कृतीनां प्रभावमप्यगृह्णात्। भारतीया न संकुचितमानसा आसन्। अन्यासां संस्कृतीनां श्रेष्ठभावनाः परम्परा-श्चात्मसात्कुर्वन्तस्ते न कदापि संकोचं प्रकटयामासुः। अतएव भारतीय-संस्कृतावन्यासामपि संस्कृतीनां श्रेष्ठभावनानामपूर्वं सम्मिश्रणं जातम्।

भारतीयसामाजिकव्यवस्थयाऽपि भारतीयसंस्कृतिसंरक्षणे पर्याप्तं साहाय्यं प्रदत्तम्। ब्राह्मणेन निष्कारणो धर्मः षडङ्गोवेदोऽध्येयो ज्ञेयश्चेति पूतनया भावनया प्रेरितैर्ब्राह्मणैर्वेदा अक्षरशः कण्ठे कृताः। एतादृशां सरस्वतीसेवकानां परिश्रममस्यैवेदं फलं यद् अस्माकं संस्कृतिरद्याप्य-क्षुण्णा।

आभिरेव विशेषताभिर्भारतीया संस्कृतिरद्यापि अप्रतिमया प्राण-शक्त्या पूरिता जगतां संस्कृतीनां समक्षं महत्त्वपूर्णं स्थानं भजते।

## २६. संस्कृते महाकाव्यानामुत्पत्तिः क्रमिको विकासश्च

संस्कतकाव्यस्याभा सर्वप्रथमं ऋग्वेदे गोचरीभवति । ऋग्वेदे एतादृशो बहवो मन्त्रा येषु तेषां कर्तारः प्रार्थनास्तरे परित्यज्य कविप्रतिभायाः परिचयं ददति । वेदेषु देवस्तुतिमन्तरा तत्कालीनानां दानशीलानां राज्ञां श्लाघनीयाः स्तुतयोऽपि दृश्यन्ते, न या 'नारांशसी' इति नाम्ना अभि-अभिधीयन्ते । ऋग्वेदे श्यावाश्यो नाम ऋषिः राज्ञस्तरन्तस्यतथा तस्य पत्न्याः शशीयस्या दानस्य भूरि भूरि श्लाघामकरोत् । ब्राह्मणग्रन्थेष्वपि प्राचीनानां कीर्तिसम्पन्नानां राज्ञां विषयेऽनेका ग्राह्यगाथा उद्धृता अभिदृश्यन्ते । एतादशामुपकरणानामस्तित्वेऽपि कविजनैः स्वकाव्ये एषामुपयोगो विशेषरूपेण न कृतः । केवलं कविमूर्धन्यः कालिदासः स्वकीये विक्रमोर्वशीये नाटके ऋग्वेदीयमुर्वशीपुरुरवः संवादं साहित्यिकरूपं प्रदाय अङ्गीचकार । परन्तु प्रमुखतया संस्कृते महाकाव्यस्योत्पत्ती रामायणमहाभारताभ्यां मन्यते । रामायणं संस्कृतस्यादिकाव्यं गण्यते । अत्रैव सा काव्यधारा प्रादुरभवद् या अश्वघोषकालिदासभारविमाघादिविभिन्नस्रोतःसु विभक्ता संस्कृतस्य काव्यकाननं चिरकालादसिञ्चत् ।

कतिपय पाश्चात्या विद्वांसः प्राकृतकाव्यान्येव संस्कृतमहाकाव्यानां प्रेरकाणि इति मन्यन्ते । परमिदमापातरमणीय प्रतिभाति ।

महाकाव्यस्यानवरुद्धा परम्पराऽश्वघोषात्परमनवच्छिन्नरूपेण लक्ष्यते । अश्वघोषस्यालंकृता विकसिता च काव्यशैली ततः प्रागपि महाकाव्यस्यास्तित्वं संकेतयति । नहि तेन नवीनकाव्यधारायाः सर्जनं कृतमपि तु प्राचीनकाव्यधारापरम्पराया स प्रेरणामलभत ।

जल्लणकृतायां सूक्तिभुक्तावल्यां राजशेखरनाम्नोद्धृते एकस्मिन् श्लोके पाणिनेर्जाम्बवतीजयम् इति नाम्नः काव्यस्य चर्चाऽस्ति—

**नमः पाणिनये तस्मै यस्मादाविरभूदिह ।**
**आदौ व्याकरणं, काव्यमनु जाम्बतीजयम् ॥**

अस्य कविता मधुरा सरसा चास्ते । अलङ्काराणां शोभा रसिकानां

हृदयमावर्जयति। एतादृश्यः अद्भुता उत्प्रेक्षा अत्र प्रयुक्ता या हृदय-सागरे बलाद् आनन्दतरंगान् उद्वेलयन्ति। शृङ्गाररसस्यैव प्राधान्येन वर्णनमस्ति। प्राकृतिकदृश्यानामत्यलंकृतभाषायां वर्णनं महत्सजीवं मनोहरं चास्ते—

**निरीक्ष्य विद्युन्नयनैः पयोदो मुखं निशायामभिसारिकायाः।**
**धारानिपातैः सह किन्नु वान्तश्चन्द्रोऽयमित्यार्ततरं ररास॥**

एकमन्यदुदाहरणमपि दृश्यताम्—

**ऐन्द्रं धनुः पाण्डुपयोधरेण शरद् दधानार्द्रनखक्षताभम्।**
**प्रसादयन्ती सकलंकमिन्दुं तापं रवेरभ्यधिकं चकार॥**

ख्रिष्टाब्दपूर्वद्वितीयशताब्द्यां पतञ्जलिर्न केवलं महाभारतेन निज परिचयं व्यनक्ति, अपितु वाररुचं काव्यमेकमुल्लिखति।

यद्यपीदं काव्यं सम्प्रति नोपलभ्यते तथापीदं ख्रिष्टाब्दपूर्वा शताब्दीष्वपि महाकाव्यस्य सत्तां सूचयति।

सम्भवतो वाररुचं काव्यं कण्ठाभरणमिति नाम्ना प्रसिद्धमासी यस्योल्लेखोऽधस्तने पद्ये राजशेखरेण कृतः।

**यथार्थता कथं नाम्नि माभूद् वररुचेरिह।**
**व्यधत्त कण्ठाभरणं यः सदा रोहणप्रियः॥**

वररुचेः कविता नूनमतिमनोहारिणी। माधुर्येण प्रसादेन चेयमो प्रोताऽस्ति। ऋतुवर्णस्य प्राचुर्यमत्र खलु। यद्यपि वर्णनं सरलं तथा सजीवमलंकारसुसज्जितं चास्ते। अस्य प्रकृतिवर्णनं तत्त्वतो विश सजीवं, संश्लिष्टं चास्ति। अस्य निरीक्षणशक्तिरप्याशुग्राहिणी खलु स्थाने प्रयुक्ता अलंकारा अपूर्वां शोभामावहन्ति। 'लुब् आख्यायिका बहूलम्' वार्तिकस्य व्याख्याप्रसंगे पतञ्जलिः वासवदत्तासुमनोत्त भैमरथीति नामभिश्चाख्यायिकात्रयस्य स्फुटोल्लेखं कुरुते। येन गद्यका स्यापि प्रचुरलोकप्रियता संलक्ष्यते। इमे ग्रन्था अपि सम्प्रतिनोपलभ्यन्ते

उपलब्धेषु महाकाव्येषु सर्वप्रथममश्वघोषविरचितं काव्यद्वयं गण्यते

अश्वघोषो बौद्धो दार्शनिकः कविश्चासीत् । 'सौन्दरानन्दम्' 'बुद्धचरितम्' चेत्यस्य द्वे महाकाव्ये स्तः । भाषायाः सारल्ये, भावनानां मार्दवे, वर्णनानां च सजीवतायां द्वे अपि महाकाव्ये संस्कृतसाहित्ये उत्कृष्टतमं स्थानं भजेते । उपमानां सौन्दर्यं, प्राकृतिकवर्णनानां नैसर्गिकता, कथा-निर्वाहे च साफल्यं पाठकानां मनो मोहयति ।

संस्कृतमहाकविषु कालिदासस्य स्थानमद्वितीयं वर्तते । तस्य कुमार-संभवमेघदूतरघुवंशनामानि त्रीणि काव्यानि विद्यन्ते । अत्र रघुवंशस्य स्थानं न केवलं कालिदासस्य काव्येषु प्रत्युत समस्तेऽपि संस्कृतवाङ्म-येऽप्रतिममास्ते ।

कुमारसंभवः कलादृष्ट्या मनोरमा कृतिरस्ति । मर्मस्पर्शिनी भाव-व्यञ्जना, उदात्तकोमला कल्पना, प्राञ्जला च पदावली पदे पदे हृदय-मावर्जयन्ति । कालिदासस्य वर्णनशक्तिः स्फुटमत्र दृश्यते । क्वचिन्नगा-धिराजस्य हिमालयस्य, क्वचिद्वासन्त्या वनश्रियः, कचिद्विलपन्त्या रतेः, क्वचिच्च तपस्यन्त्याः पार्वत्याः वर्णनं मनो रमयति । रघुवंशमहाकाव्यम् कवेः परिणतायाः प्रज्ञायाः, प्रौढ़ायाश्च प्रतिभाया उत्तमं निदर्शनमस्ति । रोचकस्य कथावस्तुनो दृष्ट्या काव्यमिदं नितान्तं सफलं वर्तते । रोच-केषु प्रसंगेषु इन्दुमतीस्वयंवरस्य, अजविलापस्यः रामसीतयोर्विमानयात्रा-याश्च प्रसङ्गा नितान्तम् हृदयावर्जकाः सन्ति ! सर्वेषामेव रसानां सफलः परिपाकोऽस्मिन्दृश्यते । कालिदासस्योपमाः सत्यमेव सौन्दर्यावहाः, अनु-रूपाः सरसाश्च वर्तन्ते ।

मेघदूतं तावद्विप्रलंभशृंगारस्यानुपममुदाहरणं विद्यते । गीतिकाव्य-दृष्ट्या विलक्षणमिदं काव्यम् संस्कृतवाङ्मयेऽखिलेऽपि ।

अश्वघोषकालिदासयुगानन्तरं चत्वारः प्रसिद्धा महाकवयः प्रादुर-भवन् । येषु महाकवेर्भारवेर्नाम प्रथमं कीर्त्यते । भारवेः कीर्तिस्तम्भस्यै-कमात्रं काव्यम् किरातार्जुनीयमस्ति । संस्कृतवृहत्त्रय्यामस्य प्रथमं स्थान-मास्ते । काव्येऽस्मिन् महाकाव्यस्य सर्वाण्यपि काव्यशास्त्रनिदिष्टानि लक्षणानि संघटन्ते । भारविर्निजार्थगौरवाय प्रसिद्धिमलभत । तस्य काव्ये

प्रतिपदमयं गुणः स्फुटीभवति । चित्रकाव्यनैपुण्यप्रदर्शनार्थं लिखिते सकलेऽप्येकस्मिन् सर्गे सर्वतोभद्रादिविविधबन्धानां कौतुकमवश्यमेव श्लाघ्यमस्ति । किरातार्जुनीयकवेः पाण्डित्यप्रदर्शनप्रवृत्तिर्लक्ष्यते । वीररसोऽस्मिन् प्रधानस्तस्मिश्च कविः पूर्णतया सफलोऽभूत् । कवित्वदृष्ट्या भारवेः स्थानम् कालिदासानन्तरं महत्त्वपूर्णमस्ति ।

भट्टिकाव्यमिति नाम्ना प्रसिद्धस्य महाकाव्यस्य कविर्भट्टिर्वलभीराज्यस्य नृपतेः श्रीधरसेनद्वितीयस्य सभापण्डित आसीत् । भट्टिकाव्यं शास्त्रकाव्यमस्तीति केचिन्मन्यन्ते । परमिदं महाकाव्यस्य सर्वैर्गुणैर्विभूषितम् खलु । अस्य चत्वारः सर्गाः दशमसर्गात्त्रयोदशसंख्यकसर्ग यावत्-काव्यस्य सर्वा विशेषताः प्रकटयन्ति । दशमः सर्गः शब्दालंकारस्यार्थालंकारस्य च सुन्दरशोभाभिरलंकृतो विद्यते । यमकालंकारस्य यावन्ति उदाहरणान्यत्रोपलभ्यन्ते तावन्ति नान्येषु काव्येषु उपलभ्यन्ते । एकादशसर्गो माधुर्यगुणं व्यनक्ति । समग्रो द्वादशसर्गोऽद्भुतान् उदात्तान च भावान् प्रकटयति । त्रयोदशे सर्गे भाषानिवेशो मनोज्ञो विद्यते । अन्येषु सर्गेष्वपि प्रसादस्य माधुर्यस्य च न्यूनता नास्ति । प्राकृतिकदृश्यानां रमणीयम् सश्लिष्टम्, विशदं च वर्णनमुपलभ्यते । क्वचिद् माघकाव्येऽप्यस्य छाया गोचरीभवति ।

कुमारदासस्य रामायणकथामूले जानकीहरणे रघुवंशस्य प्रभावो वर्तते ।

राजशेखरः कुमारदासः कालिदासस्य शैलीमनुसरतीति मन्यते—

**जानकीहरणं कर्तुं रघुवंशे स्थिते सति ।**
**कविः कुमारदासश्च रावणश्च यदि क्षमौ ।।**

श्लेषालंकारस्य प्रयोगो जानकीहरणे उपलभ्यते वर्णनेषु कालिदासस्य स्वभाविकतायाः स्थाने कृत्रिमताऽवश्यमेव गोचरीभवति । उपमारूपकार्थान्तरन्यासानां समुचितः सन्निवेशोऽत्राभिदृश्यते । महाकाव्येसमं ऋतुयुद्धप्रासादादीनां वर्णनम् सविस्तरम् पदे पदे कृतम् कविना वस्तुतस्तु जानकीहरणस्य कविता कालिदासस्य कवितावत् । प्रसादगुण

विशिष्टा खलु । स्वल्प ओजोगुणोऽप्यत्र विद्यते यः स्पष्टतया प्रत्यक्षीभवति ।

श्रवणकुमारस्येयमुक्तिः कीदृशी स्वभाविकी वर्तते—

**एवं त्वया साधयतापि लक्ष्यं नीतं विनाशं त्रितयं निरागः ।**
**मच्चक्षुषा कल्पितदृष्टिकृत्यौ वृद्धौ वने मे पितरावहं च ।।**

शिशुपालवधस्य माघकाव्येमिति संक्षिप्ततयाऽभिधीयमानस्य कर्ता माघः संस्कृतकविषु विशिष्टम् स्थानम् लभते । माघ उत्कृष्टकोटिकः कविरासीत् । तस्य काव्यमुदात्तकलाशैल्याश्च निदर्शनमस्ति । शैल्या असाधारणताऽद्भुतता च प्रतिपदं स्फुटीभवति । रसपरिपाकोऽलङ्कारसन्निवेशश्च पदे पदे काव्यश्रियम् पुष्यतः । कवेर्वर्णनाशक्तिः सजीवाऽऽस्ते, तस्य प्रकृतिनिरीक्षणसामर्थ्यमपि श्लाघ्यम् खलु । कल्पनाशक्तिरप्यप्रतिमा । माघस्योपमा अप्यनुपमाः सन्ति । शब्दालंकृतीनां मधुरो झङ्कारोऽपि अस्मन्मनांसि मोहयति । कवेः पदलालित्यमनुत्तमं वर्तते । तस्य विद्वत्ताऽपि स्थलेस्थले प्रस्फुटीभवति । बौद्धदर्शननाट्यशास्त्रव्याकरणसंगीतशास्त्रालंकारशास्त्रराजनीत्यादिविषयेषु तस्यपारङ्गतत्वम् विशिष्टस्थलेषु प्रत्यक्षीभवति । एभिरेव गुणैः शिशुपालवधस्य गणना वृहत्त्रय्यां विशिष्टत्वेन भवति ।

माघानन्तरं विरचितेषु महाकाव्येषु ह्रासयुगमाविर्भवति । अस्मिन् युगे वास्तविकी सृजनशक्तिर्न सलक्ष्यते । सकलमपि साहित्यमनुकरणात्मकम् वर्तते । काव्येषु स्वतन्त्रकविताशक्तिः कल्पनावेगो वा नगोचरीभवति ।

एतेषु ह्रासकालीनेषु कविषु रत्नाकरकविराजादीनां नामान्युल्लेखनीयानि सन्ति । रत्नाकरस्य हरविजयः पञ्चाशत्सर्गात्मकम् महाकाव्यम् वर्तते । अस्य विशालकलेवरमेवास्य महतां व्यनक्ति । परं काव्यगुणानां चमत्कारेणापीदमप्रतिममास्ते । कवेरियम् गर्वोक्तिः न खलु तथ्यरहिता—

**ललितमधुराः सालंकाराः प्रसादमनोहराः,**
**विकटयमकश्लेषोद्धारप्रबन्धनिरर्गलाः ।**
**असदृशमतीश्चित्रे मार्गे ममोद्गिरती गिरो,**
**न खलु नृपतेश्चेतो वाचस्पतेरपि शङ्कते ।।**

यद्यप्यलोचका इदम् काव्यमत्यधिकम् श्लाघन्ते तथापि पाण्डित्य-भारेणास्य काव्यस्य चमत्कारपूरिताः प्रतिभासमन्विताश्चोक्तयोऽन्तर्दधते।

हरिचन्द्रस्य धर्मशर्माभ्युदयनाम काव्य जैनमहाकाव्येषु विशिष्टं पदं भजते। सदुक्तिकर्णामृते महाकविषु तस्य गणनास्ति—

**सुबन्धौ भक्तिर्नः क इह रघुकारे न रमते।**
**धृतिर्दाक्षीपुत्रे हरति हरिचन्द्रोऽपि हृदयम्।**
**विशुद्धोक्तिः शूरः प्रकृतिमधुरा भारविगिरः**
**तथाप्यन्तर्मोद कमपि भवभूतिर्वितनुते॥**

अस्य काव्यस्य शैली वैदर्भी। चित्रालंकारस्यापूर्वां शोभामावहतीदं काव्यम्—

**रंरोऽरी रोरुररुरत्काकुकं केकि कङ्किकः।**
**चञ्चच्चञ्चुचिच्चोचे तततातीति तं ततः॥**

कवित्वस्य माधुर्यं प्रसादश्च दर्शनीये स्तः—

**सत्कर्णपीयूषरसप्रवाहं रसध्वनेरध्वनि सार्थवाहः।**
**श्रीधर्मशर्माभ्युदयाभिधानंमहाकविः काव्यमिदं व्यधत्त॥**

कविराजस्य राघवपाण्डवीये रामायणमहाभारतयोः कथा श्लेषद्वारा युगपद्वर्णिताऽस्ति एकमुदाहरणं पर्याप्स्यति—

**नृपेण कन्यां जनकेन दित्सितामयोनिजां लम्भयितुं स्वयवरे।**
**द्विजप्रकर्षेण स धर्मनन्दनः सहानुजस्तां भुवमप्यनीयत॥**

एतादृशं शाब्दिकं कौतूहलं संस्कृतवाङ्मयाद्विना संसारस्य नहि कस्यांचिद्भाषायां विद्यते।

श्रीहर्ष एतेषु उत्तरकालीनेषु कविषु उत्कृष्टं पदमलङ्करोति। अस्य प्रसिद्धं महाकाव्यं नैषधीयचरितं वृहत्त्रय्यां प्राप्तपदमस्ति। श्रीहर्षो द्वादशशताब्दयां कान्यकुब्ज (कन्नौज) नृपतेर्जयचंद्रस्य राजकविरासीत्। श्रीहर्षोऽन्यानप्यनेकान्ग्रन्थानरचयत्। नैषधीयचरिते द्वाविंशतिसर्गेषु नल-दमयन्त्योः प्रेम्णः परिणयस्य च कथाऽलंकृतायां काव्यशैल्यां वर्णिताऽस्ति।

श्रीहर्षे पाण्डित्यस्य वैदग्ध्यस्य चाप्रितमं सम्मिलनमस्ति। विशुद्ध-विदग्धपदावल्याः स आदरणीय आचार्योऽस्ति। नारीरूपवर्णनेऽपि सोऽत्यधिकः निपुणः। नवार्थघटनायामपि स कुशलः। स्थाने प्रयुक्ता अलङ्कारा अप्यपूर्वां शोभामावहन्ति। प्रकृतिवनर्णमप्यस्य विशदं, सश्लिष्टं, स्वाभाविकं च विद्यते। वस्तुतस्तु पण्डितकविष्वस्य स्थानं निरापदं, नितान्तमुन्नतं तथा महत्त्वशालि वर्तते।

नैषधानन्तरं संस्कृते नोल्लेखनीयं किमपि महाकाव्यं व्यरच्यत। यद्यपि कृष्णानन्दस्य सहृदयानन्दं, देवप्रभुसूरेः पांडवचरितम्, वेदान्त-देशिकस्य यदवाभ्युदयम् इत्यादीनि महाकाव्यानि उत्तरकाले निरमीयन्त।

## २७. संस्कृतसाहित्ये गद्यस्य विकासः

संस्कृ वाङ्मये गद्यस्य दर्शनं सर्वप्रथमं वैदिकसंहितासु भवति। कृष्णयजुर्वेदस्य तैत्तरीयसहितायां प्राचीनतमस्य गद्यस्योदाहरणमुपलभ्यते। अस्य वेदस्यान्यसंहितास्वपि गद्यस्यास्तित्वं तावन्मात्रमेव गोचरीभवति। अथर्ववेदस्य षष्ठो भागोऽपि गद्यनिर्मित आस्ते। समस्तं ब्राह्मणं छन्दो-रहितवाक्येषु निर्मितम्। आरण्यकेष्वपि गद्यस्य प्राचुर्यम्। इत्थं वैदिक-साहित्ये गद्यस्य प्रयोगो बाहुल्येनाभवत्।

दर्शनग्रन्थेषु सिद्धान्तविवेचनावसरे गद्यं प्रयुक्तमस्ति। परं ज्यौतिष-वैद्यकप्रभृतिषु वैज्ञानिकग्रन्थेष्वस्य प्रयोगः प्रायिक एव। विशुद्धसाहित्यिक-ग्रन्थेष्वपि पद्यस्य साम्राज्यम्। शास्त्रीयग्रन्थेषु गद्यस्याधिपत्यमास्ते। तत्पश्चात् महाभारते गद्यस्य प्रयोगो दृश्यते। यास्कस्य निरुक्तमपि गद्य-विरचितं खलु। पतञ्जलिना स्वकीयं महाभाष्यमपि गद्यमाध्यमेन लिखितमस्ति। श्रीमद्भागवतस्य विष्णुपुराणस्य च गद्ये साहित्यिकगद्य-स्य समस्तं सौन्दर्यं विद्यते। श्रीमद्भागवतस्य गद्यं नितान्तं प्रौढमलकृतं भावाभिव्यञ्जकञ्चास्ति। पतञ्जलेर्गद्यशैली तु कथोपकथनयोग्या, प्राञ्जला, उदात्ता च वर्तते। शबरस्वामिनः शैली सरला, हृदयग्राहिणी

च। शङ्कराचार्यस्य गद्यस्य सुषमाऽप्रतिमा। तस्य गद्ये वीणाया झङ्कारः खलु। जयन्तभट्टस्यापि गद्यं सुन्दरं, सरसं, प्राञ्जलञ्च विद्यते।

गद्यकाव्यस्योत्पत्तिसम्बन्धेऽस्माकं ज्ञानमत्यन्तं सीमितं वर्तते। अस्योद्भवः कदा कथं वाऽभवदिति निश्चितरूपेण वयं कथयितुं न प्रभवामः। गद्यकाव्यस्य विकासिततमं रूपं सर्वप्रथमं दण्डिनः, सुबन्धोर्बाणस्य च कृतिषु उपलभ्यते। एषामलंकृता काव्यशैली ततः प्रागपि गद्यकाव्यस्यास्तित्वं संकेतयति। कात्यायनः स्ववार्तिके आख्यायिकाया उल्लेखनं करोति। पतञ्जलिर्महाभाष्ये वासवदत्तासुमनोत्तराभैमरथीति नामभिश्चाख्यायिकात्रयस्य स्फुटोल्लेखं कुरुते। यद्यपीमे ग्रन्था न सम्प्रत्युपलभ्यन्ते तथापि ते ख्रिष्टाब्दपूर्वासु शताब्दीष्वपि महाकाव्यस्य सत्तां सूचयन्ति। बाणस्य हर्षचरिते भट्टारहरिचन्द्रस्य गद्यलेखकस्य चर्चाऽस्ति। तस्य कृतिरद्य नोपलभ्यते।

गद्यकाव्यस्य लेखकेषु सुबन्धुः सर्वप्रथमो लेखकः खलु। यस्य कृतिर्वासवदत्ताऽलंकृतशैल्यां निबद्धा गद्यस्योत्कृष्टतममुदाहरणमस्ति। असौ नानाविद्यासु पारंगतो दार्शनिकश्चासीत्। वस्तुतस्तु सुबन्धुः श्लेषकविः। अस्य गद्यकाव्ये कलापक्षस्यैव प्राधान्यम्। भाषायाश्चमत्कारे, भावनानां मार्दवे, वर्णनानां संजीवतायामिदं संस्कृतसाहित्येऽपूर्वं स्थानं भजते। बाणभट्टस्य वासवदत्तां प्रतीयमालोचना तत्त्वतः श्लाघ्या तथ्यपूर्णा चास्ते—

**कवीनामगलद्दर्पो नूनं वासवदत्तया।**
**शक्त्येव पाण्डुपुत्राणां गतया कर्णगोचरम्॥**

संस्कृतगद्यकविषु बाणभट्टस्य स्थानमद्वितीयं वर्तते। बाणभट्टस्य हर्षचरितम् कादम्बरी चेति द्वे काव्ये उपलभ्येते। अत्र कादम्बर्याः स्थानं न केवलं बाणभट्टस्य रचनासु परं समस्तेऽपि संस्कृतवाङ्मयेऽनुत्तमम्। कादम्बर्यां गद्यकाव्यशैल्या विकसिततमं रूपं खलु। इदं काव्यं कवेः परिणतायाः प्रज्ञायाः, प्रौढायाश्च प्रतिभाया उत्तमं निदर्शनमस्ति। बाणस्य लेखनशैली विषयवर्णनस्य नितान्तमनुरूपा, सरसा च वर्तते। अलंका-

राणां स्थाने प्रयोगोऽपूर्वं सौन्दर्यमावहति । अनुप्रासा भाषायां विलक्षण-स्वरमाधुर्यस्य संचारं कुर्वन्ति । मर्मस्पर्शिनी भावव्यञ्जना, उदात्तकोमला कल्पना, प्राञ्जला च पदावली पदे पदे हृदयमावर्जयन्ति । धर्मदासस्येय-मुक्तिरक्षरशः सत्या खलु—

**रुचिरस्वरवर्णपदा रसभाववती जगन्मनो हरति ।**
**सा किं तरुणी ? नहि नहि वाणी बाणस्य मधुरशीलस्य ॥**

दण्डिनः काव्यादर्शः दशकुमारचरितं, छन्दोविचितिश्चेति तिस्रो रचना उपलभ्यन्ते । अत्र दशकुमारचरितं संस्कृतसाहित्यस्य गद्यकाव्य-त्रय्यामेकं महत्वपूर्णं स्थानमधितिष्ठति । आख्यानानां रोमाञ्चकता कौतूहलपूर्णता चास्याप्रतिमे । नवोनशैल्या उद्भावकः खलु दण्डी । अस्य गद्यशैली सुबोधा, सरसा, प्रवाहमयी च वर्त्तते । अर्थस्य विशदता, रसस्य सुन्दराभिव्यञ्जना, पदलालित्यं, दैनन्दिनी प्रयोगक्षमता दण्डिनः शैल्या वैशिष्ट्यम् । दण्डिनः पदलालित्यम् प्रसिद्धम् । अस्योपरि पण्डितसमाजो विमुग्ध एव । शब्दचयनमपि अतिरमणीयं खलु । व्याकरणदृष्टयाऽपि दशकुमारचरितं दोषरहितमेव ।

दशकुमारचरितानन्तरं संस्कृते धनपालस्य तिलकमञ्जरी, वादीभ-सिंहस्य गद्यचिन्तामणिः, वामनभट्टबाणस्य वेमभूपालचरितम्, सोड्ढलस्य उदयसुन्दरीकथा अम्बिकादत्तव्यासस्य शिवराजविजयः इत्यादीनि गद्य-काव्यानि निरमीयन्त । अम्बिकादत्तव्यासो यथार्थतयाऽभिनवो बाणः ।

●

## २८. संस्कृते नाटकानामुत्पत्तिः क्रमिको विकासश्च

संस्कृतनाटकानामुत्पत्तिविषयकः प्रश्नोऽतिविवादग्रस्तः खलु । डा० रिजवेमहोदयः संस्कृतनाटकानां बीजं वीरपूजायां निहितमिति मनुते । नाटकप्रणयनस्य प्रवृत्तिः रुचिश्च दिवंगतान्वीरपुरुषान्प्रति सम्मानप्रदर्श-नेच्छया जागरिते इति तस्य धारणा । रामलीला कृष्णलीला चास्य सिद्धान्तस्य सत्यतां प्रमाणयतः । परमूरोपीया विद्वांसोऽपीदं मतं नाङ्गी-

कुर्वन्ति । डा० कीथमहोदयस्य मते प्राकृतिकपरिवर्त्तनानामभिनय एव संस्कृतनाटकानामुत्पत्तेः मुख्यं कारणम् । महाभाष्ये निर्दिष्टः कंसवध-नाटकस्याभिनय इदं मतं किञ्चित्स्थिरीकरोति । डा० कीथमहोदयस्य कथनमस्ति यदस्य नाटकस्य मुख्यमुद्देश्य हेमन्तोपरि वसन्तस्य विजय-सिद्धिरास्ते । परमस्य मतस्योद्भावकोऽप्यस्मिन्न विश्वसिति ।

शर्मण्यदेशजः डा० पिशलमहोदयो नाटकानामुत्पत्तर्निदानं पुत्तलिका-नृत्यमङ्गीकरोति । सूत्रधारस्थापकादिशब्दाना वाच्यमिदं मतं द्रढयति । किन्तु पुत्तलिकानां सामान्यनृत्यात्सरसनाटकस्य जन्म कथं सम्भवति ।

पिशलल्यूडर्सकोनोप्रभृतयो विद्वांसो नाटकानां प्रादुर्भावस्यादिकारण छायानाटकमुररीकुर्वन्ति । परमिदं मतमपि न समीचीनम् । यतस्ते छायानाटकानां प्राचीनतां प्रमाणीकर्त्तुं न प्रभवन्ति ।

केषांचन विदुषां मते संस्कृतनाटकानामादिकारणमृग्वेदीयेषु यमयमी-सरसापणिप्रभृतिसंवादेषूपलभ्यते । हिलेब्राण्डकोनोप्रभृतीनां विदुषां मतेन वेदेषु यज्ञयागादिसम्बन्धीनि नाटकानि विद्यन्ते । परमिदं मतमप्यापात-रमणीयम् । कामं स्याद्वैदिककर्मकाण्डेऽभिनयकलायाः प्रभावः, परं न वयं तत्र नाटकस्योत्पत्तिं द्रष्टुं प्रभवामः ।

वैदिकवाङ्मये नाटकस्य मूलतत्त्वमवश्यं विद्यते, परं नाटकस्य याथा-तथ्येन स्वरूपं न वेदेषु वैदिकग्रन्थेषु वाऽभिदृश्यते ।

महाभारते विराटपर्वणि रंगशालाया निर्देशोऽस्ति । नटशब्दस्याप्यत्र प्रयोगो गोचरीभवति । श्रीधरस्वामिनो मतेऽस्य बोधगम्योऽर्थो नवरसा-भिनयचतुर इति । हरिवंशे रामायणकथामूलस्यैकस्य नाटकस्याभिनयस्यो-ल्लेखो वर्तते । रामायणेऽपि नटरङ्गनर्तकनाटकादिशब्दानामस्तित्वं वर्तते । तत्र कुशीलवशब्दस्य प्रयोगोऽपि नटस्य अभिनेतुर्वा कृतेऽभवत् ।

पाणिनिः 'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयो' रिति सूत्रे नटसूत्रम् अर्थात् नाट्यशास्त्रं वर्णयति । अतः स्पष्टमिदं यत्पाणिनेः स्थितिकाले-ऽथवा तस्मात् प्रागेव बहूनि नाटकानि जनिं लेभिरे यान्याश्रित्य नट-सूत्राणां निर्माणमभवत् । यतो लक्षणग्रन्थानां रचना लक्ष्यग्रन्थानामनन्तर

भवति । पतंजलेर्महाभाष्ये कंसवधबलिवधनाम्नी द्वे नाटके संकेतिते स्तः ।

एवं संस्कृतनाटकानामुत्पत्तिः ख्रिष्टाब्दपूर्वशताब्दीषु समजायतेति निश्चीयते । अतः इदं निर्धार्यते यत्संस्कृतनाटकैः स्वकीये क्रमिकविकासे कतिपयानि तत्त्वानि वैदिकसाहित्यादुपलब्धानि, कतिपयानीतिहासपुराणाभ्यां, कतिपयानि च लोकगीतेभ्यः । धार्मिकैः सामूहिकैरुत्सवैश्चापि तानि प्रेरणामलभन्त । पतंजलिसमये तु तेषां पूर्णविकसितरूपेणाभिनयोऽपि प्रारब्धः । एवं भारते संस्कृतनाटकानां पूर्णविकासस्येतिहासोऽनेकशतकेषु वेष्टितः । तस्याविर्भावेऽभ्युदये चानेकेषामुपादानानामुपयोगोऽपि समभवत् ।

संस्कृतवाङ्मये वास्तविको नाटकस्याविर्भावः ख्रिष्टाब्दप्रथमशताब्दीयस्याश्वघोषस्य शारिपुत्रप्रकरणेन भवति । इदं नाटकं मध्यैशियायां तुर्कानेति नाम्नि प्रदेशे डा० ल्यूडर्समहोदयेन लब्धम् । नाट्यशास्त्रासारमिदं प्रकरणाभिधं रूपकं वर्तते भावानां, विचाराणां शब्दानाञ्च पारस्परिको विनिमयो यत्र तत्र स्फुटं परिलक्ष्यते । अश्वघोषस्य द्वेऽन्येऽपि अपूर्णे नाटके स्तः ।

महाकविभासकृतित्वेन प्रसिद्धानि नाटकानि सर्वप्रथमं नवोत्तरैकोनविंशतितमे (१९०९) ख्रिष्टाब्दे श्रीमहामहोपाध्याय टी० गणपतिशास्त्रिमहोदयैस्त्रिवेन्द्रम् इति स्थानात्प्राकाश्यं नीतानि । एषु त्रयोदशसु नाटकेषु स्वप्नवासवदत्तं कवेः श्रेष्ठतमा कृतिः, यामग्निरपि न दग्धुं प्रबभूव । यथाऽऽह राजशेखरः—

**भासनाटकचक्रेऽपि च्छेकैः क्षिप्ते परीक्षितुम् ।**
**स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः ।।**

भासस्य रचनाकालः सामान्यतः ख्रिष्टाब्दद्वितीयशतीति अवधार्यते । यद्यपि नात्र विदुषां मतैक्यम् । भासस्य नाटकानि विकसिताया नाट्यकलायाश्चरमनिदर्शनानि सन्ति ।

भासस्य नाटकेषु विविधता, बहुमुखिता च विशेषरूपेण गोचरीभवतः । एषां वैशिष्ट्यं चेदमस्ति यदेतानि सर्वाणि नाटकानि रंगमंचेऽभि-

नेयानि सन्ति। नाटकीयत्वदृष्ट्या सर्वाण्येतानि नाटकान्यशिथिलानि, व्यवस्थितानि, सुसंघटितानि च। पात्राणां संवादा अपि नातिविस्तृताः। भासः संवादतत्त्वस्य विशिष्ठे मर्मज्ञो विद्यते। अतएव भासस्य रूपकाणि शास्त्रीयदृष्ट्या सरलानि, सुबोधानि अभिनेयानि च वर्तन्ते।

भासस्य पात्राणि सजीवानि व्यक्तित्वयुतानि च सन्ति। नहि तानि प्रकारमात्राणि। विषयानुरूपं नानारसानामुन्मीलनं च तत्र। तेषु वीर शृङ्गारौ च प्राधान्येन स्तः। अनेन हेतुना कथावस्तुविन्यासे चरित्र चित्रणे च भासः प्रतिभासम्पन्नो नाटककारः खलु।

कालिदासस्य रचनाकालो विक्रमादित्योपाधिकचन्द्रगुप्तद्वितीयस शासनकाल इति मन्यते।

अस्य कवेरभिज्ञानशाकुन्तलं, मालविकाग्निमित्रं, विक्रमोर्वशीय इति त्रीणि नाटकानि सन्ति।

कालिदासस्य रचनासु काव्यशैल्या विकसिततमं रूपमुपलभ्यते तस्य मौलिकताऽपूर्वैवास्ते। कवेरस्य लोकप्रियतायाः कारणमस्त्यस प्रासादिकी लालित्ययुता वैदर्भी शैली—"वैदर्भीरीतिसन्दर्भे कालिदा विशिष्यते।" तस्य शैली व्यंजनां वृत्तिमाश्रयति नाभिधाम्। कालिदा स्य शब्दलाघवमेव तस्य कलायाः प्रधानं वैशिष्ट्यम्।

शृङ्गाररसपरिपाके कालिदासः खल्वद्वितीयं स्थानं भजते संस्कृत विषु। तस्य शृङ्गाररसः सीमितः, श्लीलः, सुरुचिपूर्णश्चास्ति। करु रसोऽप्यस्य मार्मिको व्यङ्ग्यश्च।

कवेरलङ्कारप्रेम सीमितं रुचिकरं चास्ते। अलंकाराः स्थाने प्रयु अपूर्वां शोभामावहन्ति। चरित्रचित्रणेऽपि तस्य प्रतिमाऽप्रतिमा। त पात्रसृष्टिः सजीवा व्यक्तित्वयुता च विद्यते।

संस्कृतनाट्यकलायाश्चरमो विकासः कलिदासकृतिष्ववलोक्यते तस्याभिज्ञानशाकुन्तलं तु विश्वस्मिन्नपि जगति लब्धख्याति विश्वसाहि ऽपूर्वं पदमलङ्करोति। शर्मण्यकविर्गेटेमहोदयः शाकुन्तलं प्रति यान् भाव व्यनक्ति तेऽस्य नाट्यकलायाः श्रेष्ठत्वं ज्ञापयन्ति। अन्येऽपि द्वे ना तस्य नाट्यकलाया उत्कृष्टे उदाहरणे स्तः।

शूद्रकस्य मृच्छकटिकमपि स्वविलक्षणतया संस्कृतवाङ्मयेऽपूर्वं स्थानं भजते। संस्कृतनाटकेषु एकमात्रमिदमेव नाटकं चरित्रचित्रणप्रधानमस्ति। संस्कृतस्यान्यैः नाटकैः समं नहि तस्मिन्नस्माकं समाजस्य सम्भ्रान्तवर्गस्यैव चित्रणमास्ते, प्रत्युत समाजस्य सर्वप्रकाराणां व्यक्तीनां यथार्थं निरूपणं वर्तते।

शूद्रकस्य शैली सरला, प्रवाहयुता चास्ति। तस्य भाषाऽपि मार्मिकभावोद्घाटने समर्था खलु। क्वचित्करुणरसस्य धारा प्रवहमाना दृश्यते, क्वचिच्च शृङ्गाररसस्य स्निग्धा व्यञ्जना। प्रकृतिचित्रणमपि यत्र तत्र मनोरमं प्रत्यक्षीभवति। सुन्दरा भावा रमणीया उपमाः, सरसाः कल्पनाश्च पाठकानां चित्तमावर्जयन्ति।

भट्टनारायणस्य वेणीसंहारोऽपि संस्कृतसाहित्ये वीररसस्य सफलं नाटकं वर्तते। काव्यदृष्ट्या इदं सुन्दरं, शोभनं, हृदयावर्जकं, प्रभावशालि चास्ते।

हर्षस्य प्रियदर्शिकानागानन्दरत्नावलीति त्रीणि नाटकान्युल्लेखनीयानि सन्ति। घटनानामाश्चर्यजनकं साम्यमत्र दर्शनीयम्। रत्नावलीसंस्कृतसाहित्यस्य प्रथमा सफला नाटिका खलु। श्रीहर्षस्य चरित्रचित्रणमपि व्यक्तित्वयुतं, सजीवमुदात्तं, प्रणयपूरितं, स्निग्धं चास्ति। श्रीहर्षः संस्कृतनाटकारेषु प्रणयनाटिकानां निर्मातृरूपेणऽग्रगण्यो वर्तते। अस्य प्रकृतिचित्रणं नूनं संजीव, संश्लिष्टं, विशदं च। काव्यशैली सरला, सुबोधा च खलु। एवं काव्यकलाया नाट्यकलायाश्च चरमो विकासस्तस्य कृतिषु उपलभ्यते।

विशाखदत्तस्य मुद्राराक्षसनाटकमप्यद्वितीयं खलु। वस्तुतस्तु अस्य नाटकस्याद्यन्तमेकान्तत ओजस्वि, पौरुषमूर्जस्वलम् च वर्त्तते। नाटकस्य व्यापारः पूर्णरूपेण गद्यात्मकः। सुघटितकथावस्तुयोजनायां व्यक्तित्वयुतचरित्रचित्रणे, ओजस्विवातावरणस्य सृष्ट्यां च संस्कृतसाहित्येऽद्वितीयमेतत् सफलनाटकमित्यत्र नास्ति विदुषां मतवैपरीत्यम्।

भवभूतेर्महावीरचरितं मालतीमाधवमुत्तररामचरितं चेति नाटकत्रयी

तद्योयां कीर्तिपताकां संस्कृतवाङ्मयस्य व्योम्नि विस्तारयति । महावीरचरिते कविः रामायणकथां रोचकरूपेण प्रस्तोतुं प्रयतते, यद्यप्यत्र तस्य कलाया नास्ति परिपूर्णः परिपाकः । मालतीमाधवं मालतीमाधवयोः प्रणयं परिणयं च चित्रयति । अस्मिन्नाटके कवेः प्रतिभा महावीरचरितापेक्षयाऽधिकतरं विकसिताऽस्ति । उत्तररामचरितं कवेरन्तिमं सर्वोत्कृष्टं नाटकं वर्तते । नाटकेऽस्मिन्सफलनाटकापेक्षिताः सर्वेऽपि गुणाः प्राप्यन्ते । मानवीयभावनामभिव्यक्तौ, कोमलभावनानां च मार्मिकविश्लेषणे भवभूतिरप्रतिमः खलु । भवभूतेः प्रकृतिवर्णनम् विशदं, संजीवं संश्लिष्टं चास्ते । करुणरसस्य नितान्तगम्भीरो मर्मस्पर्शी च परिपाकः खलु । एभिर्गुणैराकृष्टाः समालोचका आहुः—

**उत्तरे रामचरिते भवभूतिर्विशिष्यते ।**

दिङ्नागस्य कुन्दमाला, मुरारेरनर्घराघवम्, राजशेखरस्य कपूरमञ्जरी, विद्धशालभञ्जिका, बालरामायणं, बालभारतं चेति नाटकचतुष्टयम्, जयदेवस्य प्रसन्नराघवम्, कृष्णमिश्रस्य च प्रबोधचन्द्रोदयम् इतीमानि अन्यानि नाटकानि उल्लेखनीयानि सन्ति ।

वस्तुतस्तु भवभूत्यनन्तरमुत्कृष्टनाटकानामभावः एव सञ्जातः । भवभूतौ तत्पूर्ववर्तिषु च नाटककारेषु नाट्यकलाया नाट्यशैल्याश्च विकासः स्वभाविकरूपेणाभवत् । इयं स्वाभाविकता उत्तरस्मिन्काले विरलाऽजायत । तत्स्थानं च कृत्रिमनाट्यकौशलेनाग्राहि । मुरारिराजशेखरादीनां नाटकानि ह्रासयुगस्य प्रवृत्तीनां निर्देशं कुर्वन्ति, तथाप्येषां कृत्रिमतायां न सा पराकाष्ठाऽवलोक्यते या ख्रिष्टाद्द्वादशशताब्द्युत्तरकालीनासु कृतिषु संलक्ष्यते ।

मुरारेरनर्घराघवनाटकम् भवभूतेः महावीरचरितमाश्रयते । कथानकमपि प्रायस्तत्तुल्यमेव । कथानकस्यानावश्यको विस्तारस्तस्मै रोचते । भावप्रदर्शनेऽत्युक्तीनां प्राचुर्यमभिदृश्यते । पात्राणां प्राचीनम् रूपं तादृशमेव लक्ष्यते । कवेः शब्दराशिः विशाल एव । पदशय्या प्रौढ़ा ए गम्भीरा च । उपमा मौलिका एव । कवेः विलक्षणमौलिकतामवलोक्य कश्चित्समा-

लोचक आह—'मुरारेस्तृतीयः पन्थाः।' कवेः भावप्रकाशनक्षमता सर्वोत्कृष्टा। परवर्तिनः कवयो मुरारेर्गम्भीरतां भूरि श्लाघन्ते। पद्यानां नादसौन्दर्यमपि दर्शनीयम्। प्रौढकवित्वदृष्ट्या व्याकरणविषयकपाण्डित्यदृष्ट्या च अनर्घराघवनाटकमादर्शा कृतिः। वस्तुतस्तु नाट्यकलापेक्षया तस्मिन्नाटके पाण्डित्यस्य प्राधान्यम्। एभिर्गुणैराकृष्टा भारतीयसमालोचकास्तमित्थं प्रशंसन्ति—

**मुरारि-पदचिन्ता चेत्तदा माघे रतिं कुरु।**
**मुरारिपदचिन्ता चेत्तदा माऽघे रतिं कुरु॥**

कतिपये आलोचका भवभूतेरपि मुरारेः श्रेष्ठत्वमुद्घोषयन्ति—

**मुरारिपदचिन्तायां भवभूतेस्तु का कथा।**
**भवभूतिं परित्यज्य मुरारिमुररीकुरु॥**

राजशेखरस्य कर्पूरमंजरी बालरामायणबालभारतविद्धशालभंजिकेति चत्वारि नाटकान्युपलभ्यन्ते। कर्पूरमंजर्याः पदलालित्यं दर्शनीयमस्ति। भारतीयसाहित्ये आद्योपान्तम् प्राकृते रचितमेकमात्रमिदमेव नाटकमास्ते। हास्यरसोऽप्यत्राप्रतिमः।

राजशेखरस्य नाटकेषु प्रवाहस्य शिथिलता, हास्यरसस्य न्यूनता, नाट्यकलाकौशलस्याभावश्च स्फुटं गोचरीभवन्ति। पद्यानां रमणीयं गीतसौन्दर्यं, चारुः शब्दविन्यासो, ध्वन्यर्थकानुप्रासश्च दर्शनीयानि खलु! कवेर्भाषाकौशलश्चाप्यद्भुतः। कश्चित्प्राचीनः कविः सुष्ठु आह—

**पातुं श्रोत्ररसायनं रचयितुं वाचः सतां सम्मतां**
**व्युत्पत्तिं परमामवाप्तुमवधिं लब्धुं रसस्रोतसः॥**
**भोक्तुं स्वादुफलं च जीविततरोर्यद्यस्ति ते कौतुकं।**
**तद् भ्रातः शृण राजशेखरकवेः सूक्तीः सुधास्यन्दिनीः॥**

खिष्टैकादशशताब्दीतः संस्कृतनाटकानां ह्रासयुगं प्रारभते। ह्रासकालेऽस्मिन्न नाटकानां संख्यादृष्ट्या ह्रासोऽपितु गुणदृष्ट्यैव। नाटकानि तु परःशतसंख्यकानि विरचितानि, पर तेषु स्वाभाविकनाट्यकलायाः ह्रासः स्फुटमाभाति।

## २६. वाल्मीकिः

महर्षिर्वाल्मीकिः संस्कृतभाषाया आद्यः कविरस्ति । तस्य रामायणं चादिकाव्यं वर्तते । अत्रैव सा काव्यधारा प्रादुरभवत् या अश्वघोषकालिदासभारविमाघादिविभिन्नस्रोतःसु विभक्ता संस्कृतस्य काव्यकाननं चिरकालादसिञ्चत् । मधुमयभणितीनां मार्गदर्शी महर्षिः खलु । संसारे एतादृशं प्रियं महाकाव्यम् नोपलभ्यते । समस्तं भारतमेतदेकस्वरेण पवित्रमादर्शभूतञ्चाङ्गीकरोति । कश्चित्कविराह—

कवीन्दुं नौमि वाल्मीकिं यस्य रामायणीं कथाम् ।
चन्द्रिकमिव चिन्वन्ति चकोरा इव साधवः ॥

इदं महाकाव्यं तु विश्वस्मिन्नपि जगति लब्धख्याति विश्वसाहित्येऽपूर्वं पदमलङ्करोति । ऐतिहासिककालस्यारुणोदये विरचितमपीदमप्रतिममास्ते ।

रामायणात्प्राक् किल लौकिकच्छन्दसामाविर्भावो नाभवत्—'आम्नायादन्यत्र नूतनश्छन्दसामवतारः ।' अनुष्टुप्छन्दसो वाल्मीकिः खलु आविष्कर्त्ता । तमसातीरे क्रौञ्चमिथुनात्काममाहितमेकं निषादोऽवधीत् । क्रौञ्चं महीतले निहतम् दृष्ट्वा तस्य भार्या क्रन्दनमकरोत् । स्नानार्थं तत्र समागतो भगवान्वाल्मीकिर्यदा क्रन्दन्तीं तामवलोकितवान् तदा तस्य चित्तं करुणार्द्रमभवत् । सहसा तस्य पवित्रकण्ठादियं करुणामयी गिरा निःसृता—

मा निषाद प्रतिष्ठां त्वमगमश्शाश्वतीस्समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥

चकितो मुनिर्यावत्तमेवार्थं चिन्तयन्नासीत्तावद् ब्रह्मा प्रादुर्बभूव । स तमृषिमवोचद्—'ऋषे, वाङ्मये ब्रह्मणि त्वं प्रकष्टो ज्ञानवानसि, अतो रामचरितमुपवर्णय । अप्रतिहतज्योतिरार्षं ते चक्षुः प्रतिभातु । आद्यकविरसि ।' इत्युक्त्वा तत्रैवान्तर्हितः । ततो भगवान्वाल्मीकिरादिकाव्यं रामायणं प्रणिनाय । रामायणस्य रचनाकालः ख्रिष्टाब्दपूर्वपञ्चमशतकमस्ति ।

भारतीयसंस्कृतेर्यादृशं समुज्ज्वलं सुन्दरमेवं स्वाभाविकं चित्रणमत्रास्ति तादृशं विश्वकाव्येषु नोपलभ्यते। भारतस्य बालवृद्धवनिता नहीदं केवलं शिक्षयति पर तेषां हृदयान्पीदमावर्जयति।

रामायणे महाकव्यानुरूपं विषयस्योदात्तता, घटनानां वैचित्र्यपूर्णो विन्यासः, भाषायाः सौष्ठवञ्च गोचरीभवन्ति सर्वत्र। अलंकृतशैलीविभूषितेषु महाकाव्येष्वस्य स्थानं सर्वमुखमास्ते। यतो रचनाशैली, विचारमनोज्ञता रमणीयदृश्यचित्रणञ्चास्याप्रतिमानि खलु। होमरवर्जिलमिल्टनप्रभृतीनां महानुभावानामपेक्षया भाषायागाम्भीर्यं, छन्दसामौचित्यं, रसपरिपाकश्च नूनमत्रातिशेरते। मानवस्यान्तःप्रकृत्याः स्वाभाविकं, सूक्ष्मं, सुन्दरं च विश्लेषणं यादृङ्मनोहारि तादृगेव बाह्यप्राकृतिकदृश्यानां सजीवं याथातथ्येन चित्रणपि। मानवमनोवृत्तीनां यादृशं व्यापक विशदं निरूपणमत्रोपलभ्यते तादृशमन्यत्र दुर्लभम्। भारतीयसभ्यताया नूनमेमेतत्प्रतीकम्।

यथा रामायणं नैतिकादाशानामाकरः खलु तथैव तदेकं महत्वपूर्णं मानवीयसमाजशास्त्रमपि। तत्कालीनयुगस्यामलो मुकुरइदमस्ति। भारतीयार्याणां जीवनयापनस्य सजीवं वर्णनमिदमुपढौकते।

आद्यकवेरिदं समस्तं काव्यं कवितायाः सत्यं स्वरूपं प्रकटयति। मनोरमाणामुपमानामुत्प्रेक्षाणाञ्चेदमेकं भव्यं हर्म्यं खलु। इदं नूनं महाकाव्यस्याद्यं रमणीयं निदर्शनमास्ते। अस्य प्रमुखो रसः करुण एव। आनन्दवर्धनाचार्योऽपि करुणरसमेवास्य मुख्यरसं मन्यते—

'रामायणे हि करुणो रसः स्वयमादिकविना सूचितः' शोकः श्लोकत्वमागतः, इत्येवंवादिना। निर्व्यूढश्च स एवं सीताऽत्यन्तवियोगपर्यन्तमेव स्वप्रबन्धमुपरचयता।' (ध्वन्यालोकः)

चरित्रचित्रणेऽपि वाल्मीकेः प्रतिभाऽप्रतिमा। तस्य पात्रसृष्टिः सजीवा व्यक्तित्वयुता च विद्यते। महर्षिवाल्मीकिदृष्ट्या चरित्रमेव मानवताया निकषः खलु। सीतारामयोः पूतं चरित्रं हि वाल्मीकेः कोमलकाव्यप्रतिभाया मनोरमं निदर्शनमास्ते। स्वयं पद्मयोनिरस्य श्लाघां कुर्वन्नाह—

यावत्स्थास्यन्ति गिरयः सरितश्च महीले ।
तावद्रामायणकथा लोकेषु प्रचरिष्यति ।।

एवं सिध्यति यन्नहि वाल्मीकिरेकमात्रं भारतीयसाहित्यस्योन्नायकोऽपि तु भारतीयसंस्कृतेः स संस्कारको मनीषी च । कश्चित्कविः कृतकृत्यः सन्वाल्मीकिमित्थं वदन्ते—

कूजन्त राम रामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ।।

## ३०. विधिरहो बलवानिति मे मतिः

भाग्यपुरुषार्थयोर्विवादस्तु प्राचीन एव । भाग्यं परमं मन्यमानास्त
भाग्यमेव सर्वस्वं मन्यन्ते । तेषां मते दैवेऽनुकूले सर्वं सिध्यति प्रतिकूले
दैवे च हस्तगतमपि विनश्यति । बहुसाधनता हि विधौ प्रतिकूलतामुपगते
विफलत्वमेति दैवहतको यत्र गच्छति तत्रैवापदोऽपि यान्ति । कृतेऽपि
विपुले प्रयत्ने भाग्यहीनो लघुमात्रमपि फलं न लभते । एवमेषां मते
भाग्यमेव सर्वस्वम् ।

भाग्यं तुच्छं मन्यमानास्तु पुरुषार्थमेव परमं मन्यन्ते । पुरुषस्य स्व
सुखसम्पादनार्थं कृत उद्योगः पौरुषमित्युच्यते । पौरुषेणैव मनुष्यः सफल
भवति निजोद्देश्ये । न पुरुषकारं विना कश्चनाल्पमपि कार्यं क्षमः साध
यितुम् । दैवं परमं मन्यमाना मानवा मनोरथेनैवात्मानमानन्दयन्ति, प
न तेषां लक्ष्यसिद्धिर्जायते मनोरथमात्रेण एतच्चोक्तं कविना—

उद्यमेनैव सिध्यन्ति कार्याणि न मनोरथैः ।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ।।

दैवमेवावलम्ब्य हस्ते हस्तं धृत्वा स्थितो मानवः परिणामे दुःख
माप्नोति सिद्धिश्च तेषांकर्मणि दूरीभवति । तथाऽऽह विशाखदत्तो मुद्रा
राक्षसे—'दैवमविद्वांसः प्रमाणयन्ति ।' अथ किं नाम दैवम् ? पुरातन
नुष्ठितकर्मणां परिणतिरेव दैवमिति भणन्ति नीतिविदः । वस्तुतस्तु ए

दैवमपि पौरुषेणैव फलति । अतः पौरुषस्यावलम्बनमेव भाग्यस्य वास्तविकाऽऽराधना । पौरुषाश्रयणं विना भाग्याराधनस्य न किमपि फलम् ।

एवंविधे मतद्वयस्य कलहे प्रवृत्ते कविराह—

**नालम्बते दैष्टिकतां न निषीदति पौरुषे ।**
**शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते ॥**

यथा सत्कवि : शब्दार्थावाश्रयते तथैव विद्वानपि दैवपुरुष.र्थयोर्द्वयमाश्रयते ।

पौरुषेणैव यदि सर्वाणि कार्याणि सिध्यन्ति तदाऽकृतप्रयत्ना अपि सफलतां कथमधिगच्छन्ति कृतप्रयत्नाश्च कथं विफलीभवन्ति । मेधाविनश्छात्राः कथमवतीर्णा भवन्ति, अयोग्याश्च कथं परीक्षामुत्तरन्ति । कठिनोद्योगे कृतेऽपि विरुद्धे दैवे कृषकाः समृद्धं धान्यं न प्राप्नुवन्ति समृद्धं धान्यमपि दैवे प्रतिकूले ईतिभिर्विनश्यति । कृषकस्य क्षेत्रकर्षण बीजवपनं, जलसेकश्च सर्वाणितथा मुधैव सिद्धयन्ति । अत्र पुरुषार्थस्य निरर्थकता स्वतः सिद्धा । परमस्यैतन्न तात्पर्यं यत्पुरुषार्थं विनैव सिद्धिरवाप्यते मनुजैः । पुरुषार्थं विना सज्जितमपि भोजनं नात्तुं शक्यते । यदि कोऽपि पुरुषार्थं न कुर्यात्कथं तस्य कार्यं सिध्यति । कृषको यदि क्षेत्रकर्षणं, बीजवपनं, जलसेकं च यथाकालं न विदधीत दैवं च प्रमाणयन्गृहे एव तिष्ठेत्कथं तभ्य धान्यप्राप्तिर्धनागमश्च स्यात् । अतः पुरुषार्थोऽपि महत्त्वं धारयति । दैवं पौरुषं च खलु साफल्यरथस्य चक्रद्वयम् । द्वयोरेव चक्रयोः साहाय्येन साफल्यमधिगच्छति मानवः । अत एवोक्तम्—

**यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् ।**
**तथा पुरुषकारेण विना दैवं न सिध्यति ॥**

नहि केवलं दैवं सर्वं साधयितुं प्रभवति, नापि पुरुषार्थः सर्वं समुत्पादयति । विद्वांस एतद्द्वयमेवाश्रित्य कार्येषु प्रवर्तन्ते । यदा यत्ने कृतेऽपि कार्यसिद्धिर्न जायते अथवा प्रस्तुतेऽपि साधनशते विफलतामधिगच्छति मानवस्तदा दैवस्य बलवत्त्वं मुक्तकण्ठेन सोऽङ्गीकरोति ।

प्रायेण विपत्तिकाले मतिमन्तोऽपि मूर्खा जायन्ते । दैवाधीनमेतत्सर्वम् ।

एतादृशेऽवसरे दैवं हि मानवानां मतिं हरति। तदा मतिमन्तोऽपि किं-कर्त्तव्यविमूढा जायन्ते। मतिमतामग्रणी रामभद्रोऽपि कनकमृगमवलोक्य मोहमवाप। कश्चित्कविराह--

**असम्भवं हेममृगस्य जन्म, तथापि रामो लुलुभे मृगाय।**
**प्रायः समापन्नविपत्तिकाले धियो हि पुंसां मलिना भवन्ति॥**

अतः इदं सिध्यति यद्विधाता यथेच्छं मानवं नर्तयति।

दैवं परमं मन्यमानस्तु फलानामप्राप्त्या नावसीदति 'कर्म मया कृतं तत्परिणतिस्तु दैवाधीना' इतिभावनया कर्मणि नियुक्तो मनुष्यः कार्य-वैफल्येऽपि सन्तोषं करोति। अतः सुष्ठु कथितं केनचित्कविना—

**रविनिशाकरयोर्ग्रहपीडनं, गजभजङ्गविहङ्गमबन्धनम्।**
**मतिमतां च निरीक्ष्य दरिद्रतां, विधिरहो बलवानिति मे मतिः।**

## ३१. महाकविरश्वघोषः

संस्कृतवाङ्मये येषामल्पसंख्यकानां कविनां रचनाकालविषये विद्वत्सु अधिको मतभेदो नास्ति तेषु अश्वघोषोऽपि वर्तते। अश्वघोषः कनिष्कस्य समकालीन आसीदिति तु सर्वैर्मन्यते। अतोऽश्वघोषस्य रचनाकालः कनिष्क (१-५० A.D.) राज्यकालेऽवधार्यते। तदीयान्तः साक्ष्येनाप्ये-तत्सिध्यति।

असौ साकेत जन्म लेभे। ब्राह्मणकुले उत्पन्नोऽयं वैदिकसाहित्यस्य चूडान्तः पण्डित आसीत्। महाभारतस्य विशेषरूपेण वाल्मीकिरामायण-स्यायं मर्मज्ञश्च। अश्वघोषस्य निम्नाङ्किताः प्रामाणिकाः ग्रन्थाः सन्ति-बुद्धचरितम्, सौन्दरनन्दम्, शारिपुत्रप्रकरणम्।

बुद्धचरितं भगवतो बुद्धस्य चरितम्। अस्मिन् तस्योपदेशानां सिद्धान्तानाञ्चापि निरूपणमस्ति। बुद्धचरितस्य प्रथमसर्गस्य पञ्चम-सर्गस्य त्रयोदशसर्गस्य च कतिपये अंशाः काव्यकलादृष्ट्या सुन्दरा महत्व-

पूर्णाश्च सन्ति । शेषं समस्तं बुद्धचरितं धर्मशास्त्रवद् दर्शनशास्त्रवच्च नीरसं जातम् । वस्तुतस्तु अस्मिन् काव्ये धार्मिकताया नीतिवादस्य च प्राधान्यम् ।

कलायाः शैल्याश्च दृष्ट्या अश्वघोषस्य बुद्धचरितं महाकाव्यं संस्कृतेऽपूर्वं स्थानमर्हति । तस्य काव्यमुदात्तकलाशैल्याश्चरमं निदर्शनमस्ति । शैल्या असाधारणताद्भुतता च प्रतिपद्य स्फुटा भवति । रसपरिपाकोऽलङ्कारनिवेशश्च पदे पदे काव्यश्रियं पुष्यतः । उपमाः सुषमासमन्विताः रुचिकराश्च । रमणीयोपमानां नास्ति तत्राभावः । वर्णनाशक्तिः सजीवा आस्ते । तस्य निरीक्षणसामर्थ्यमपि श्लाघ्यं खलु । कल्पनाशक्तिरप्रतिमा वर्तते । प्रकृतिवर्णनमपि दर्शनीयम् । शब्दालंकृतीनां मधुरो झङ्कारोऽपि अस्मन्मनांसि मोहयति । कवेः पदलालित्यमप्रतिमं वर्तते । शृङ्गारे करुणरसस्य समावेशेनास्य कविता सहृदयान् स्वतः आकर्षति । शान्तरसप्रधानमेतत् काव्यम् । रसपरिपाकेऽपि कविर्नितान्तः सफलः खलु । इदं काव्यं कवेः परिणतायाः प्रज्ञायाः प्रौढायाश्च प्रतिभाया उत्तमं निदर्शनमस्ति । रोचकस्य कथावस्तुनो दृष्टया काव्यमिदं नितान्तं सफलं वर्तते । भाषायां च कवेरासामान्योऽधिकारोऽस्ति । अस्य शैल्या विशिष्टो गुणो मनोहारी शब्दविन्यासः । तत्त्वत इयं कृतिः सर्वांशतः सफलतामलभत ।

सौन्दरनन्दे महाकाव्ये भगवतो बुद्धस्य विमातृजस्य नन्दस्य एवं सुन्दरीनामिकायास्तस्य भार्यायाः कथाऽस्ति । काव्यशैलीद्वारा बौद्धधर्मस्योदात्तान् सिद्धान्तान् स्पष्टीकृत्य वैराग्यं प्रति उद्बोधनमेवास्य काव्यस्योद्देश्यं प्रतीयते । अस्य काव्यस्य शैली शुद्धा वैदर्भी अस्ति । भाषायाः सरलता, भावानां कोमलता, वर्णनस्य च सजीवता बलात्पाठकानां चित्तमाह्लादयन्ति । एतत् महाकाव्यं विषयस्य गम्भीरतायां कोमलकाव्यभावनाचित्रणे च बुद्धिचरितादधिकतरं सरसम् ।

नाटकानां वास्तविक आरम्भः ख्रिष्टाब्दप्रथमशताब्दीयस्य अश्वघोषस्य शारिपुत्रप्रकरणेन भवति । इदं नाटकं तुर्फानेति नाम्नि प्रदेशे

डा० ल्यूडर्स Dr. Liuders) महोदयेन सम्प्राप्तम् । नाट्यशास्त्रानुसारमिदं प्रकरणाभिधं रूपकं वर्त्तते ।

भगवतो बुद्धाद् दीक्षां गृहीत्वा शारिपुत्रो मौद्गल्यायनश्च बौद्धधर्मे प्राविशतामित्यस्यात्र वर्णनमस्ति । नान्दीप्रस्तावनासूत्रधारप्रभृतीनां प्रयोगोऽन्येषां संस्कृतनाटकानामिवात्रोपलभ्यते । भरतवाक्यन्तु नोपलक्ष्यते । प्राकृतभाषाः प्रयोगोऽपि संस्कृतनाटकानां सममेवाभवत् । प्राकृतभाषायाः प्रभावेणात्र संस्कृतभाषायां यत्र तत्र अशुद्धयोऽपि दृश्यन्ते । प्राकृतभाषायां बह्वः आर्षप्रयोगा अपि उपलभ्यन्ते ।

अश्वघोषस्य प्रतिभा उन्मुक्ता, उदात्ता चास्ति । स खलु संस्कृतसाहित्यस्य मौलिकः कलाकारो वर्तते ।

एवं चाभिर्विशेषताभिरश्वघोषः संस्कृतवाङ्मये उच्चतरं स्थानमलंकरोति ।

## ३२. नाटककारो भासः

संस्कृतसाहित्यस्येतिहासे नाटककारेषु भासस्य नाम सर्वप्रथमेव गण्यते । तस्य नाटकेषु स्वप्नवासवदत्तं श्रेष्ठतमा कृतिः ।

भासस्य रचनाकालः सामान्यतः ख्रिष्टाब्दद्वितीयशताब्दीति अवधार्यते, यद्यपि नात्र मतैक्यम् । भासस्यकृतित्वेन प्रसिद्धानि नाटकानि सर्वप्रथमं नवोत्तरैकोनविंशतितमे (१९०९) ख्रिष्टाब्दे श्रीमहामहोपाध्यायैः टी० गणपतिशास्त्रिमहोदयैस्त्रिवेन्द्रमिति स्थानात्प्रांकाश्यं नं तानि । एषु नाटकेषु स्वप्नवासवदत्तमेव केचिद् भासस्य कृतिं मन्यन्ते । भासस्य त्रयोदशनाटकानि निम्नाङ्कितान्युपलभ्यन्ते—

स्वप्नवासवदत्तम्, प्रतिज्ञायौगन्धरायणम्, बालचरितम् पञ्चरात्रम्, प्रतिमानाटकम्, अभिषेकानाटकम् दरिद्रचारुदत्तम्, मध्यमव्यायोगनाटकम्, दूतवाक्यम्, दूतघटोत्कचनाटकम्, कर्णभारनाटकम्, उरुभंगनाटकम्, अविमारकनाटकम् ।

अभिषेके प्रतिमायां च कविः रामायणकथां संक्षेपेण प्रस्तोतुं प्रयतते

अभिषेके तस्य कलाया नास्ति परिपूर्णः परिपाकः। इदं नाटकमभिनययोग्यमास्ते। प्रतिमाया च कवेः प्रतिभा अभिषेकापेक्षयाऽधिकतरं विकसिताऽस्ति, कतिपया मौलिकोद्भावना अप्यत्र दृग्गोचरीभवन्ति। उभयोर्नाटकयोश्चरित्रचित्रणे कविः सफलतां न लेभे। 'मध्यमव्यायोगस्य' 'दूतघटोत्कचस्य' च कथायामपि नूतना कल्पना दृश्यन्ते। दूतघटोत्कचे दुर्योधनघटोत्कचयोः संवादा वीररसपूरिताः सन्ति। दूतवाक्ये श्रीकृष्णदुर्योधनयोश्चरित्रस्य वैषम्यं प्रदर्शितम्। श्रीकृष्णचरित्रस्य महत्ता दुर्योधनचरित्रस्य हीनतेदमेवोभयोश्चरित्रस्य वैषम्यम्।

'उरुभंगे' भीमदुर्योधनयोः गदायुद्धस्य सविस्तरं वर्णनमस्ति। दुर्योधनोऽस्य नाटकस्य नहि नायकः प्रत्युत प्रतिनायकः। दुर्योधनस्य चरित्रचित्रणे कविः सर्वशः सफलतामलभत। संस्कृतवाङ्मये उरुभङ्गनाटकमेव एकमात्रं दुःखान्तं नाटकमस्ति। बालचरिते श्रीकृष्णस्य बाललीलानां चित्रणमस्ति। कतिपया नूतना कल्पना अप्यत्र विद्यन्ते। व्यापारान्वितेरत्राभावो दृश्यते। पञ्चरात्रे महाभारतस्य विराट्पर्वस्य कथा नवीनोद्भावनया प्रस्तुता कविना। विराट्पर्वस्य अनेकानि नाटकीयदृश्यानि अत्रोपलभ्यन्ते।

अविमारकस्य कथा लोककथामूला वर्त्तते। डा० कीथमहोदयः प्रेमकथामाश्रित्य निर्मितमिदं नाटकं मन्यते परं चरित्रचित्रणे अतिभावुकतायाः प्रदर्शनेन कथानकस्य प्रगतिर्निरुद्धा। 'दरिद्रचारुदत्तम्' चारुदत्तवसन्तसेनयोः प्रणयं चित्रयति अस्य चत्वारोऽङ्का एव उपलब्धाः अतोऽनुमीयते यद्भासस्य मृत्युकारणादिदं न समाप्तम्। शूद्रस्य मृच्छकटिकमपीदमवलम्बते।

प्रतिज्ञायौगन्धरायणे उदयनकथाया उल्लेखोऽस्ति। आखेटविद्यानुरागिणं कौशाम्बीनृपमुदयनं महासेनः कृत्रिमहस्तिव्याजेनापहृतवान्। उदयनस्यामात्यो दृढप्रतिज्ञो यौगन्धरायणो नहि केवलमुदयनं बन्धनादमुञ्चत् प्रत्युत कपटेन वासवदत्तामपि अपाहरत्। अमात्यस्य दृढप्रतिज्ञाया कुटिलनीत्याश्चेदं सर्वश्रेष्ठं निदर्शनमस्ति। महासेनस्य प्रासादस्य

दृश्यं, तृतीयाङ्के विदूषकस्य, उन्मत्तकस्य च संवादा नाटकमधिकं विभूषयन्ति ।

स्वप्नवासवदत्तं तत्त्वतो भासस्य सर्वोत्कृष्टा कृतिः, यां पावकोऽपि न दग्धुं प्रबभूव । यथा आह राजशेखरः—

भासनाटकचक्रेऽपिच्छेकैः क्षिप्ते परीक्षितुम् ।
स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः ।।

उदयनस्याद्धैतिहासिकीं कथामत्राङ्कयति कविः । श्रीहर्षस्य रत्नावली प्रियदर्शिका चापि इमां कथामाश्रयेते । नाटकेऽस्मिन् सफलनाटकापेक्षिताः सर्वेऽपि गुणाः प्राप्यन्ते । अस्य घटनाचक्रमतिकौशलेन कविरगुम्फत । कार्यान्वितेरत्रापूर्वो निर्वाहोऽभवत् । येन नाटकमधिक प्रभावोत्पादकं सञ्जातम् । उदयनः स्वशत्रुं वत्सं जेतुमिच्छति । एतदर्थं मगधस्य राज्ञो दर्शकस्य साहाय्यमपेक्षितमस्ति । वासवदत्ता आत्मानं निगुह्य पदमावती-परिणये तस्य साहाय्यं करोति । मृता वासवदत्तेति विश्वासे सञ्जाते उदयनो दर्शकस्य भगिनीं पद्मावतीं परिणयति । श्यालकस्य दर्शकस्य साहाय्येन उदयनो वत्सं विजयते । पश्चाद् वासवदत्ता उदयनेन संगच्छते । चरित्रचित्रणेऽपि कविरधिकः सतर्को जागरूकश्च । तस्य पात्रसृष्टिः सजीवा व्यक्तित्वयुता च । वासवदत्तायास्त्यागोऽस्त्य प्रतिमः । पद्मावत्या सार्धं निवसन्ती अपि सा सपत्नीद्वेषेण न सीदति । प्रत्युत सा पद्मावती-परिणये उदयनस्य प्रच्छन्नरूपेण साहाय्यं करोति ।

एतादृशं पूतं विशुद्धञ्च प्रेम नान्यत्रोपलभ्यते । कुरंग्याश्चरित्रमपि सुन्दरमस्ति । परं नास्ति तत्र भावनां संघर्षः । वस्तुतस्तु इदं नाटकं भासस्य नाट्यकुशलतायाश्चूडान्तं निदर्शनमस्ति ।

भाषायां कवेरसामान्योऽधिकारः प्रतीयते । तस्य भाषायामेको विस्मापकश्चमत्कारः । स्वल्पानि वाक्यानि भावगम्भीराणि च सन्ति । भासस्य रचनासु नाट्यकुशलताया विकसिततमं रूपमुपलभ्यते । तस्य मौलिकताऽपूर्वैवास्ते । यद्यपि तदीयकृतिविषयाः प्राचीनाख्यानेभ्य उद्धृतास्तथापि तस्य काव्यसृष्टिरद्भुता मौलिका चास्ते । तस्य शैली प्रासादिकी

लालित्ययुता च। तस्य शैली व्यञ्जनां वृत्तिमाश्रयति नाभिधाम्। भासस्य शब्दलाघवमेव तस्य कलायाः प्राधान्यं वैशिष्ट्यम्। कवेरलङ्कार-प्रेम सीमितं रुचिकरं चास्ते। अलङ्काराः स्थाने प्रयुक्ता अपूर्वां शोभामावहन्ति। भासस्य वर्णनाशक्तिरप्रतिमाऽस्ति। प्रकृतिवर्णनं विशदं, सजीवं, संश्लिष्टं चास्ति। प्रकृतिवर्णनस्यैकमुदाहरणं पर्याप्स्यति—

खगा वासोपेताः सलिलमवगाढो मुनिजनः,
प्रदीप्तोऽग्निर्भाति प्रविचरति धूमो मुनिवनम्।
परिभ्रष्टो दूराद्रविरपि च संक्षिप्तकिरणो,
रथं व्यावर्त्याऽसौ प्रविशति शनैरस्तशिखरम्॥

भासस्य उपमाः सत्यमेव रमणीया अनुरूपाः सरसाश्च वर्त्तन्ते। एकं पद्यमुदाह्रियते—

सूर्य इव गतो रामः सूर्यं दिवस इव लक्ष्मणोऽनुगतः।
सूर्यदिवसावसाने छायेव न दृश्यते सीता॥

अन्यच्च भासस्योपमाः सरला मार्मिक्यो बोधगम्याश्च सन्ति—

कः कं शक्तो रक्षितुं मृत्युकाले रज्जुच्छेदे के घटं धारयन्ति।
एवं लोकस्तुल्यधर्मा वनानां काले काले छिद्यते रुह्यते च॥

रसपरिपाकेऽपि भासः खल्वद्वितीयं स्थानं भजते संस्कृतकविषु। विषयानुसारं नानारसानां तस्य कृतिषु उन्मीलनमस्ति। येषु वीरशृङ्गारौ प्रधानौ सवर्णाक्षराणां प्रयोगेऽपि खलु तस्य नैसर्गिकी प्रवृत्तिः—

कुलद्वयं हन्ति मदेन नारी, कूलद्वयं क्षुब्धजला नदीव।

लोकोक्तीनां प्रयोगोऽपि मार्मिकः प्रभवोत्पादकश्च—

कालक्रमेण जगतः परिवर्तमाना।
चक्रारपंक्तिरिव गच्छति भाग्यपंक्तिः।

भासस्य प्रतिभा उन्मुक्ता, उदात्ता चास्ति। स खलु संस्कृतसाहित्यस्य मौलिकः कलाकारः।

आभिर्विशेषताभिः प्रभावितौ कालिदासशूद्रकावपि भासस्य नाट्यकलाया अनुकरणं कृतवन्तौ। अस्मिन् क्षेत्रे तौ भासस्य ऋणिकौ स्तः।

## ३३. नाटककारः शूद्रकः

"शूद्रकस्य मृच्छकटिकम्" संस्कृतनाटकेषु स्वरचनाशैल्याऽद्वितीय स्थानं भजते। नाटककारोऽतिकौशलेनास्य प्रणयवृत्तं राजनीतिविषयैः सार्धं सम्बध्नाति। संस्कृतवाङ्मये इद िव एकमात्रं नाटकं चरित्रचित्रण-प्रधानमास्ते।

शूद्रकः ऐतिहासिकः कविः खलु। स एव मृच्छकटिकस्य यथार्थो लेखकः। विशाखदत्तस्य रचनाकालः ख्रिष्टाब्दपञ्चमशतकमस्ति, यद्यपि नात्रास्ति मतैक्यम्। यूरोपीयानां लेखकानां मते शूद्रको नह्यस्य रच-यिता। रामिलसोमिलौ कविवरौ मिलित्वा शूद्रककथानामकं पुस्तकम-लिखताम्। परमिदं सर्वमापातरमणीयम्। शूद्रकः स्वरचनायां नाना-प्रकाराणि पात्राणि सृष्ट्वा तत्कालीनस्य समाजस्यातिसजीवं यथार्थ चित्रणकमरोत्। संस्कृतस्यान्यैः नाटकैः सममस्मिन्नहि सम्भ्रान्तवर्गस्यैव चित्रणमस्ति अपि तु सर्वप्रकाराणां पात्राणां निरूपणमास्ते। चौरधूर्त वेश्याकुट्टनीराष्ट्रियराज्यपरिवर्त्तकप्रभृतीनि विविधानि पात्राणि स्वव्या पारैः पाठकानां चित्तानि आवर्जयन्ति।

अस्य नाटकस्य कथानकस्य द्वौ भागौ स्तः। प्रथमो भागो वसन्त सेनाचारुदत्तयोः प्रणयं चित्रयति। द्वितीयो भागः आर्यकस्य राज्यप्राप्ति मङ्कयति। प्रथमो भागो भासस्य दरिद्रचारुदत्तमविकलमाश्रयते। राज नीतिविषयस्योद्भावना मूलोद्भूता। द्वयोरंशयोरन्वितिरपि दर्शनी यार्ऽस्ति।

चरित्रचित्रणेऽपि शूद्रकस्य प्रतिभाऽप्रतिमा। तस्य पात्रसृष्टिः सजीव व्यक्तित्वयुता च। नायकश्चारुदत्तो ब्राह्मणो धीरः प्रशान्तश्च। स सद चारस्य निदर्शनमस्ति—

दीनानां कल्पवृक्षः स्वगुणफलनतः सज्जनानां कुटुम्बी।
आदर्शः शिक्षितानां सुचरितनिकषः शीलवेला समुद्रः।
सत्कर्त्ता नावमन्ता पुरुषगुणनिधिर्दक्षिणोदारसत्वो।
ह्येकः श्लाघ्यः स जीवत्यधिकगुणतया चोच्छ्वसन्तीव चान्ये॥

उज्जयिनीनिवासिनी वसन्तसेना अस्य नाटकस्य नायिका खलु। स्त्रीसुलभाः कोमलभावना अस्यां सन्निविशन्ति। अस्या हृदयमतिकोमलं दयार्द्रं च। अन्येषां पात्राणां चरित्रचित्रणमपि चारुचित्रितं शूद्रकेण।

शूद्रकस्य शैली सरला प्रवाहयुता च। कस्यचिदपि भावस्य मार्मिकीमभिव्यक्तिं कर्त्तुं सा क्षमा। नूतना भावाः, रमणीया उपमाः, सरसाश्च कल्पनाः पदे पदे उपलभ्यन्ते। क्वचित्करुणरसस्य सरसा धारा प्रवहति क्वचिच्च शृंगाररसस्य स्निग्धा व्यंजना आस्ते। अस्य प्रमुखो रसः शृङ्गार एव। एकमुदाहरणं पर्याप्स्यति—

धन्यानि तेषां खलु जीवितानि ये कामिनीनां गृहमागतानाम्।
आर्द्राणि मेघोदकशीतलानि गात्राणि गात्रेषु परिष्वजन्ति॥

कवेर्वर्णनाशक्तिरप्रतिमा चास्ते। प्रथमाङ्के दरिद्रताया वर्णनं चित्तमावर्जयति। अधस्तने पद्ये दरिद्रस्य दयनीयावस्थायाः कीदृग्यथार्थं चित्रणमस्ति—

दारिद्र्यात्पुरुषस्य बान्धवजनो वाक्येन सन्तिष्ठते
सुस्निग्धा विमुखीभवन्ति सुहृदः स्फारीभवन्त्यापदः।
सत्त्वं ह्रासमुपैति शीलशशिनः कान्तिः परिम्लायते
पापं कर्म च यत्परैरपि कृतं तत्तस्य सम्भाव्यते॥

प्रकृतिवर्णनमपि विशदं सजीवं संश्लिष्टं चास्ति।

वर्षारात्रे वर्णनमपि हृदयग्राहि—

संसक्तैरिव चक्रवाकमिथुनैर्हंसैः प्रडीनैरिव
व्याविद्धैरिव मीनचक्रमकरैर्हर्म्यैरिव प्रोच्छ्रितैः।
तैस्तैराकृतिविस्तरैरनुगतैर्मेघैः समभ्युन्नतैः
पत्रच्छेद्यमिवेह भाति गगनं विश्लेषितैर्वायुना॥

निम्नाङ्किते पद्ये चन्द्रोदयस्य वर्णनमपि कीदृग् विचित्रमस्ति—

उदयति हि शशांकः कामिनीगण्डपाण्डु-
र्ग्रहगणपरिवारो राजमार्गप्रदीपः।
तिमिरनिकरमध्ये रश्मयो यस्य गौराः
स्रुतजल इव पङ्के क्षीरधाराः पतन्ति॥

भाषायां कवेरसामान्योऽधिकारः प्रतीयते। तस्य शैल्या विशिष्टो गुणो मनोहारी शब्दविन्यासोऽस्ति। सप्तविधेन प्राकृतेनालंकृतमिदं नाटकं संस्कृतवाङ्मयस्योच्चतमं स्थानं भजते।

शूद्रकस्य प्रतिभा उन्मुक्ता उदात्ता चास्ते। स खलु संस्कृतसाहित्यस्य मौलिकः कलाकारो वर्तते। शूद्रकस्य नाट्यकला वस्तुतः श्लाघनीया स्पृहणीया चास्ति। निम्नवर्गस्य जीवनरसं स्पृशन्निदं नाटकं तत्त्वतः संस्कृतनाटकसाहित्येऽप्यतुलनीयं स्थानमाश्रयते।

## ३४. महाकविः कालिदासः

न केवलं पौरस्त्यदृष्ट्या किन्तु पाश्चात्यदृष्ट्याऽपि संस्कृते साहित्ये महाकविकालिदासस्याद्वितीयं स्थानमस्ति। नाट्यकलायाः कमनीयता निरीक्ष्यतां काव्यस्य वर्णनाशोभा अवलोक्यतां गीतिकाव्यस्य सरसता हृदये निधीयतां, सर्वत्रैव कालिदासस्य प्रतिभा सर्वातिशायिनी वर्त्तते। संस्कृतवाङ्मयस्य महाकवयोऽपि अस्य कविकुलगुरोः कीर्तिं महिमानं च गायन्तो न विश्रम्यन्ति। विश्वसाहित्येऽपि कालिदासस्य कवित्वस्य सम्मानं नीयते।

भारतीयपरम्परानुसारं कालिदासो विक्रमादित्यस्य सभापण्डित आसीत्—

धन्वन्तरिक्षपणकामरसिंहशंकुवेतालभट्टघटकर्परकालिदासाः।
ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य॥

परमियं जनश्रुतिरैतिहासिकप्रमाणैर्न परिपोष्यते। सामान्यतः कालिदासस्य स्थितिर्गुप्तयुगे चन्द्रगुप्तद्वितीय (३३५—४१३ A. D.) राज्यकालेऽवधार्यते। चन्द्रगुप्तद्वितीयो विक्रमादित्य इत्युपाधिमदधात्। तस्यैव सभामयं कविरलंचकारेति आधुनिकविदुषां निश्चयस्तदीयान्तःसाक्ष्येनापि सिध्यति।

कालिदासस्य निम्नांकिता ग्रन्था: सन्ति—

रघुवंशः, ऋतुसंहारः, मेघदूतम्, कुमारसम्भवः।

मालविकाग्निमित्रम्, विक्रमोर्वशीयम्, अभिज्ञानशाकुन्तलम् इति। एषु कुमारसम्भवो रघुवंशश्च महाकाव्ये स्तः।

कुमारसम्भवः कालिदासस्य कलायाः रमणीयं निदर्शनमस्ति। मर्मस्पर्शिनी भावव्यंजना, उदात्तकोमला कल्पना, प्राञ्जला च पदावली पदे पदे हृदयमावर्जयन्ति। कालिदासस्य वर्णनाशक्तिः स्फुटमत्र दृश्यते। प्रसादपूर्णशैल्यां क्वचिद् ऋतुराजस्य वासन्त्या वनश्रियः, क्वचिन्नगाधिराजस्य हिमाद्रेः, क्वचिद्विवाहितानां विलासस्य, क्वचित्प्रियतमवियोगज्वालासन्तप्तायाः नायिकायाः क्वचिद्विलपन्त्यारतेः, क्वचित्तपस्यन्त्याः पार्वत्याः, क्वचिद् वटुवेषधारिणः शिवस्य, क्वचिच्च तपस्विन्याः पार्वत्याः संवादस्य वर्णना मनो रमयन्ति। कुमारसम्भवस्य कविः सर्वतो रसवादी। यौवनस्य सरसक्रीडाया वर्णनमेव कवेर्लक्ष्यं प्रतीयते। अत्र कवेर्लक्षणाशक्तिरपूर्वया आभया प्रस्फुटिता।

न केवलं कालिदासस्य काव्येषु सर्वेषु किन्तु समस्तेऽपि संस्कृतवाङ्मये रघुवंशस्य स्थानमुत्कृष्टतमं वर्त्तते। इदं काव्यं कवेः परिणतायाः प्रज्ञायाः प्रौढायाश्च प्रतिभाया उत्तममुदाहरणमस्ति। रोचकस्य कथावस्तुनो दृष्ट्या काव्यमिदं नितान्तं सफलं वर्तते। रोचकेषु प्रसंगेषु इन्दुमतीस्वयंवरस्य, अजविलापस्य, सीतारामयोर्विमानयात्रायाः, निर्वासितायाः सीतायाः सन्देशस्य प्रसंगाः नितान्तहृदयावर्जकाः सन्ति। एषु प्रत्येकं घटनाया वर्णनं स्वाभाविकमेव मनोरमयति। अध्ययनकृतां हृदयेषु ते स्वकीयामलोप्यां स्मृतिं परित्यजन्ति। प्रायः सर्वेषामपि रसानां सफलः परिपाको रघुवंशे दृश्यते। अलंकाराणां प्रयोगोऽपि भावचित्रस्याथवा दृश्यचित्रस्य रमणीयतायै सर्वत्राभवत्। प्रसादगुणगुम्फिता भाषा एतादृशी सुबोधा सरला च यदल्पज्ञोऽपि काव्यरसास्वादनं कर्त्तुं प्रभवति।

कालिदासो नहि केवलं योषितः शृङ्गारिकताया निर्देशकः परं तस्याः स्वाभिमानस्यापि चित्रकारः—

**वाच्यस्त्वया मद्वचनात्स राजा वह्नौ विशुद्धामपि यत्समक्षम्।**
**मां लोकवादश्रवणादहासीः श्रुतस्य किं तत्सदृशं कुलस्य॥**

तस्य कविकल्पना सततं नूतनानि चित्राणि सृजति । क्षणे क्षणे यन्न-वतामुपैति तदेव रूपं रमणीयतायाः इति लोकोक्तिः कालिदासस्य रच-नासु पूर्णतया घटते ।

रघुवंशस्यानुपमा आदर्शाः, ललिताः संवादाः, सरसा भावव्यञ्जनाः, कोमलो मधुरश्च रसपरिपाकः कालिदासस्य कीर्त्तिपताकां सततं स्पन्दि-ष्यन्ते । कालिदास उपमायै प्रसिद्धोऽस्ति—'उपमा कालिदासस्य' इति । तस्योपमाः सत्यमेव सौन्दर्यावहा अनुरूपाः सरसाश्च वर्तन्ते । कालिदास-स्योपमा यथा रमणीयतोपेतास्तथैव यथार्था अपि । प्रस्तूयते—

संस्कृतस्य गीतिकाव्यसाहित्ये मेघदूतस्यापि विशिष्टं स्थानं खलु । इदं तावद्विप्रलंभश्रृङ्गारस्यानुत्तममुदाहरणमस्ति । सुकुमारकल्पनाया अनुरूपमेव तस्य शैली अपि रमणीयतरा । भाषा प्रांजला, परिमार्जिता, प्रवाहपूर्णा चास्ति । शब्दचयने कालिदासेन विशेषः कौशलः प्रदर्शितः । क्वचिन्माधुर्यव्यञ्जिका स्निग्धा मधुरा च पदावली अस्ति—

**मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वां**
**वामश्चायं नदति मधुरं चातकस्ते सगन्धः ।**

क्वचित्कोमलकान्तपदावलिद्वारा प्रेमिकायाः हृदयकलिकायाः सुकु-मारता प्रस्फुटिता—

**आशाबन्धः कुसुमसदृशो प्रायशो ह्यङ्गनानां**
**सद्यःपाति प्रणयि हृदयं विप्रयोगे रुणद्धि ।**

मेघदूतस्य पद्यानां रमणीयता, स्वरसौष्ठवम् माधुर्यविलासः, कोमला संगीतलहरी च दर्शनीयानि ।

विरहविधुरायाः यक्षपत्न्याः कीदृश स्वाभाविकम् तथा लघु शब्द-चित्रमस्ति—

**उत्संगे या मलिनवसने सौम्य निक्षिप्य वीणां,**
**मद्गोत्राङ्कं विरचितपदं गेयमुद्गातुकामा ।**
**तन्त्रीमार्द्रां नयनसलिलैः सारयित्वा कथंचिद्,**
**भूयो भूयः स्वयमपि कृतां मूर्च्छनां विस्मरन्ती ॥**

मेघदूते अलंकाराणां यथास्थानम् समुचितः प्रयोगः कविताकामिन्याः सौन्दर्यमभिवर्धयति। पूर्वमेघो बाह्यप्राकृतिकसौन्दर्यस्य सुन्दरं निदर्शनम्। उत्तरमेघस्तु मानवहृदयस्य सौन्दर्यस्य अभिरामतायाश्च विमलमुदाहरणम्। किम्बहुना, गीतिकाव्यदृष्ट्या विलक्षणमिदं काव्यं संस्कृतवाङ्मयेऽखिलेऽपि।

कालिदासस्य प्रौढासु कृतिषु ऋतुसंहारस्य नास्त्यधिकं महत्त्वम्। तत्र कवेः प्रारम्भिकं प्रकृतिप्रेम चित्रितमस्ति। परं नहि तत्र भावानां नूतनता। प्रणयिहृदयेषु प्रकृतिप्रभावस्यैतदुल्लासपूर्णं चित्रम्। अभिव्यञ्जनाशक्त्यास्तत्र प्रयोगो न दृश्यते। परं कालिदासस्य प्रसादगुणः सर्वत्र विद्यते।

कालिदासस्य रचनासु काव्यकौशलस्य विकसितं रूपमुपलभ्यते। तस्य मौलिकताऽद्वितीयैवास्ते। यद्यपि तेन प्राचीनाख्यानकेभ्यः स्वकृतिविषया उद्धृतास्तथापि तस्य काव्यसृष्टिरद्भुता मौलिका चास्ते। आङ्गलमहाकविः सेक्सपियरोऽपि अन्येभ्य एवोद्गमेभ्यः कथाविषयाञ्चिनोति, पर तस्य महिमा अद्वितीयमौलिकताया एव कारणम्। कविशिरोमणेः कालिदासस्य महत्त्वं तस्य कल्पनाशक्त्यां कलानिर्माणप्रतिभायां चास्ति।

कालिदासस्य लोकप्रियतायाः प्रधानं कारणं तस्य प्रसादपूर्णा, लालित्ययुक्ता, परिष्कृता च शैली। कालिदासस्य शैली वैदर्भी।

'वैदर्भीरीतिसन्दर्भे कालिदासो विशिष्यते।' वैदर्भीरीत्याः सर्वप्रथममुद्भावना कालिदासेन कृता इति दण्डी मन्यते। तस्य शैलो व्यञ्जनां वृत्तिमाश्रयति नाभिधाम्। कालिदासस्य शब्दलाघवमेव तस्य कलायाः प्रमुखं वैशिष्ट्यम्। कोमलभावनानां व्यञ्जनायां कालिदासोऽप्रतिमोऽस्ति। अतः प्रसन्नराघवस्य कर्त्ता कालिदासं 'कविता कामिनीविलासः' इत्युपाधिनाऽलंकरोति। श्रृङ्गाररसपरिपाके कालिदासः खल्वद्वितीयम् स्थानं भजते संस्कृतकविषु। श्रृङ्गाररसस्य सम्भोगविप्रलम्भयोर्यादृक् सूक्ष्मतया मार्मिकमुद्घाटनं कालिदासेन कृतं तादृग विश्वस्य नह्यन्येन

केनचिदपि कविना कृतमिति तु निश्चितम् । तस्य शृङ्गाररसः सीमागतः श्लीलः सुरुचिपूर्णश्चास्ति । करुणरसोऽप्यस्य मार्मिको व्यङ्ग्यश्च ।

कवेरलंकारप्रेम सीमितं रुचिकर चास्ते । अलङ्काराः स्थाने प्रयुक्ता अपूर्वां शोभामावहन्ति—'प्रजाः प्रजानाथ पितेव पासि' 'वधाय वध्यस्य शरं शरण्यः' 'मनुष्यवाचा मनुवंशकेतुम् ।'

चरित्रचित्रणेऽपि कालिदासोऽद्वितीयः । तस्य पात्रसृष्टिः सजीवा व्यक्तित्वयुता च विद्यते । अस्माकं कल्पनायां निवसन्त्यपि तानि पात्राणि नित्यनूतनानि चिरसुन्दराणि च सन्ति ।

भारतीयसाहित्ये तानि पत्राणि अमरतामलभन्त । कालिदासस्य कृतिषु अश्लीलता, च्युतसंस्कृतिः, औचित्यभङ्गः, एवं रसदोषश्च कच्चिदुलभ्यन्ते । परम् 'एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः' इति सूक्त्यनुसारं ते विचारविरुद्धा एवमुपेक्षणीयाः । प्रासादप्राचुर्यमाधुर्यसन्निवेशभावसौष्ठवालंकाररमणीयताभाषालालित्यप्रभृतिभिर्गुणैः कालिदासस्य कविता विश्ववन्द्या संजाता । कालिदाससम्बन्धे कस्यचिद् आलोचकस्येयमुक्तिरस्ति—

**पुरा कवीनां गणनाप्रसंगे कनिष्ठकाधिष्ठतिकालिदासा ।**
**अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूव ।।**

कालिदासं प्रति बाणभट्टस्येयमुक्तिरपि समीचीना एव—

**निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु ।**
**प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव जायते ।।**

कालिदासविरचितानि नाटकान्यपि नाट्यकलादृष्ट्या उत्कृष्टानि सर्वाङ्गमनोरमाणि च सन्ति । तस्येदमभिज्ञानशाकुन्तलं तु विश्वस्मिन्नपि जगति लब्धख्याति विश्वसाहित्येऽपूर्वं पदमलङ्करोति । शर्मण्यकविर्गेटेमहोदयः शाकुन्तलं प्रति यान्भावान्व्यनक्ति तेऽस्य लोकप्रियताया निश्चितं प्रमाणम् । अधस्तत्कृतप्रशंसायाः संस्कृतानुवादः प्रस्तूयते—

**वासन्तं कुसुमं फलं च युगपद् ग्रीष्मस्य सर्वं च यद्,**
**यच्चान्यन्मनसो रसायनमतः सन्तर्पणं मोहनम ।**
**एकीभूतमभूतपूर्वमथवा स्वर्लोकभूलोकयो**
**रैश्वर्यं यदि वाञ्छसि प्रियसखे शाकुन्तलं सेव्यताम् ।।**

# ३५. नाटककारो भवभूतिः

संस्कृतनाटककारेषु भवभूतेर्नाम कालिदासानन्तरमेव गण्यते। तस्य नाटकानि संस्कृतवाङ्मयस्य अमरा विभूतयः खलु।

भवभूतेः रचनाकालोऽष्टमशताब्द्या आरम्भोऽस्ति। ख्रिष्टनवमशताब्दीयो राजशेखर आत्मानं भवभूतेरवतारं वर्णयति। वामनः (८०० A.D.) निजकाव्यालंकारसूत्रवृत्त्याम् उत्तररामचरितात्पद्यमेकमुद्धरति। अतस्तदीयः कालः ८०० तमाद्वत्सरात् प्रागिति निश्चीयते। राजतरङ्गिण्या ज्ञायते यद्भवभूतिः कान्यकुब्जाधिपतेर्यशोवर्मणः राजकविरासीत्। अनेनापि कवेरस्योपर्युक्तः कालः सिध्यति।

भवभूतेस्त्रीणि नाटकानि—महावीरचरितं मालतीमाधवमुत्तररामचरितम् च—तदीयां कीर्तिपताकां संस्कृतवाङ्मयस्य व्योम्नि विस्तारयन्ति।

महावीरचरितस्य कथा रामकथामूलाऽस्ति। अत्रेतिवृत्तस्यैक्यं सौन्दर्यपरिपूर्णम्। वीररसस्यात्र प्राधान्यम्। महावीरचरितोपरि भासस्य 'बालचरितस्य' एवमभिषेकस्य प्रभावः स्फुटं परिलक्ष्यते। परं महावीरचरिते तस्य कलाया नास्ति परिपूर्णो विकासः। दीर्घाः संवादाः, वर्णनात्मकाः प्रसंगाश्चानेकत्र घटनाविकासे अवरोधं जनयन्ति। पात्राणां चरित्रस्य क्रमशो विकासोऽप्यत्र न। मानवहृदस्य सूक्ष्मनिरीक्षणमेवं भाषाया भावानाञ्चोदात्तताऽप्यत्र नोपलभ्यते। परं वीररसस्य परिपाकोऽत्र परिपूर्णः। लक्ष्मणस्येयमुक्तिः कीदृशी दर्पपूर्णा—

**दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यत—**
**टंकारध्वनिरार्यबालचरितप्रस्तावनाडिंडिमः।**
**द्राक्पर्यस्तकपालसम्पुटमिलद्ब्रह्माण्डभाण्डोदर—**
**भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति।**

मालतीमाधवं मालतीमाधवयोः प्रणयं परिणयं च चित्रयति। अस्मिन्नाटके कवेः प्रतिभा महावीरचरितापेक्षयाऽधिकतरं विकसिताऽस्ति। भवभूतिः सर्वत्र दाम्पत्यप्रेम्ण एवादर्शमुपस्थापयति। क्षतिकारको धर्म-

विरुद्धः प्रणयः कविना उपेक्षितः। प्रणयस्य महती उदात्ता कल्पनाऽ पाठकानां समक्षे प्रस्तुता। तथाहि मालतीमाधवे कविराह—

**प्रेयो मित्रं बन्धुता वा समस्ताः सर्वे कामाः शेवधिर्जीवितं वा।**
**स्त्रीणां भर्ता धर्मदाराश्च पुंसामित्यन्योऽन्यं वत्सयोर्ज्ञातमस्तु॥**

मालतीमाधवं भवभूतेः काव्यकलायाः सुन्दरं निदर्शनम्। अस नाटकस्योपरि भासस्य 'अविमारकस्य' प्रभावोऽस्ति।

उत्तररामचरितं कवेरन्तिमं सर्वोत्कृष्टं नाटकं वर्त्तते। अस्य क रामायणमूलाऽस्ति। डा० वेलकरमतानुसारमस्य मूलकथा पद्मपुराण श्रयते। इदं नाटकं कवेर्नाट्यकलायाश्चरमं विकासं सूचयति। यथा कश्चिदाह 'उत्तरे रामचरिते भवभूतिर्विशिष्यते'। उत्तररामचरित प्रथमांके सम्भोगश्रृङ्गारस्य परिपूर्णः परिपाकोऽस्ति। विप्रलम्भश्रृङ्गा स्य परिपाकेऽपि भवभूतिः सफलः। वियोगश्रृङ्गारस्यैकं पद्यमुदाह्रिय

**दलति हृदयं गाढोद्वेगं द्विधा तु न भिद्यते,**
**वहति विकलः कायो मोहं न मुञ्चति चेतनाम्।**
**ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्,**
**प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम्॥**

वीररसस्याप्येकं सुन्दरमुदाहरणं प्रस्तूयते—

**ज्याजिह्वयावलयितोत्कटकोटिदंष्ट्र—**
**मुद्गारघोरघनघर्घरघोषमेतत्।**
**ग्रासप्रसक्तहसदंतकवक्त्रयन्त्र—**
**जृम्भाविडम्बि विकटोदरमस्तु चापम्॥**

एवं रसपरिपाके कविर्नितान्तः सफलः। रसेषु करुणरसे एव विशिष्टो मोहः। अस्य चोत्तमः परिपाक उत्तररामचरितेऽवलोक्य "कारुण्यं भवभूतिरेव तनुते" इत्युक्तिरुत्तररामचरितमुद्दिश्यैव कि केनापि। गोवर्धनाचार्योऽस्य करुणरसं प्रशंसन्नाह—

**भवभूतेः सम्बन्धाद् भूधरभूरेव भारती भाति।**
**एतत्कृतकारुण्ये किमन्यथा रोदिति ग्रावा॥**

गोवर्धनाचार्यस्येयं श्लाघा उत्तररामचरितस्य 'अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम्' इत्यनेन सह कीदृक् संघटते। अन्ये सर्वे रसाः करुणरसस्यैव विकाराः सन्ति। तथाहि—

एको रसः करुण एव निमित्तभेदाद्,
भिन्नः पृथक् पृथगिवाश्रयते विवर्त्तान्।
आवर्त्तबुद्बुदतरंगमयान् विकारान्,
अम्भो यथा सलिलमेव हि तत्समग्रम्॥

भवभूतेः करुणो रसो गम्भीरो मार्मिकश्चास्ति। परिपाके कवेर्भाव-प्रवणता प्रतिपदं मुखरीभवति। कवेः करुणरसस्य धारा संस्कृतसाहित्ये-ऽपूर्वाऽमूल्या चास्ति। भवभूतेः करुणरसस्येदृशः प्रभावो यद् जडा अपि चैतन्यमभजन्त—

जडानामपि चैतन्य भवभूतेरभूद् गिरा।
ग्रावाऽप्यरोदीत्पार्वत्या हसतः स्म स्तनावपि॥

भवभूतेर्नाट्यकलायां भावपक्षस्य प्राधान्यमस्ति। मानवीयभावना-नामभिव्यक्तौ कोमलमनोभावनानां च मार्मिकविश्लेषणे भवभूतिरप्रतिमः खलु। कस्या अपि मनोदशाया विस्तृतं, विशदं, सजीवं च वर्णनं भवभूते-र्विशेषताऽऽस्ते। भावगाम्भीर्ये कवेः कविताऽनुपमाऽस्ति। एकमुदाहरणं पर्याप्स्यति—

व्यतिषजति पदार्थानान्तरः कोऽपि हेतु—
न खलु बहिरुपाधीन्प्रीतयः संश्रयन्ते।
विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्त॥

चरित्रचित्रणेऽपि भवभूतिः पूर्णः सफलः। रामस्य चरित्रमुदात्तमा-दर्शान्वितं प्रख्यातपरम्परानुरूपञ्च। अधस्तना उद्गारा यस्य राज्ञो मुखात्स्वतो निःसरन्ति तस्य चरित्रस्य महिमा केन वर्णयितुं शक्यते—

स्नेहं दयां च सौख्यं च यदि वा जानकीमपि।
आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा॥

सीता पीडितायाः नार्याः प्रतीकम् । कठोरगर्भावस्थायां रामेण निर्वासितऽपि सा तद्विरुद्धमेकं शब्दमपि नाकथयत् । ईदृशं पातिव्रत्यस्योदाहरणमन्यत्र क्वचिदपि न लभ्यते ।

भवभूतेवर्णनशक्तिरप्रतिमाऽस्ति । भवभूतेः प्रकृतिवर्णनं विशदं, सजीवं संश्लिष्टं चास्ति । भीषणप्राकृतिकदृश्येषु कवेश्चेतो विशिष्टं रमते । दण्डकारण्यस्य भयावहतां निदाघमध्याह्नस्य च भीषणतां कविर्ध्वनिचित्रैश्चित्रयति । क्वचिदसौ प्रकृते रम्यरूपाण्यपि अङ्कयति । पद्यमेकमत्र उदाह्रियते—

**इह समदशकुन्ताक्रान्तवानीरवीरु—**
**त्प्रसवसुरभिशीतस्वच्छतोया वहन्ति ।**
**फलभरपरिणामश्यामजम्बूनिकुंज—**
**स्खलनमुखरभूरिस्त्रोतसो निर्झरिण्यः ।**

भवभूतेः प्रेमवर्णनमनुपमं भावगम्भीरं चास्ति । प्रेमविषयकोऽस्यादर्शो महान्वर्त्तते । तदीया प्रेमपरिभाषाया अनुभूतिमाञ्चित्य प्रवर्तते । तथाहि—

**अद्वैतं सुखदुःखयोरनुगुणं सर्वास्ववस्थासु यद्**
**विश्रामो हृदयस्य यत्र जरसाऽप्यस्मिन्नहार्यो रसः ।।**

संस्कृतभाषायां भवभूतेरसाधारणोऽधिकारो विद्यते । भाषाऽनुचरीव तमनुसरति । भवभूतेः शैल्याः विशेषो गुणस्तस्य मनोहारी शब्दविन्यासोऽस्ति । 'यं ब्रह्माणमियं देवी वाग्वश्येवानुवर्तते' इति गर्वोक्तिर्नार्थहीना खलु । भाषायाः प्रौढत्वं, शब्दविन्यासस्य प्राञ्जलता, व्यञ्जनायाः सौन्दर्यमर्थस्य गौरवमुत्तररामचरिते सर्वत्र दृश्यते । भवभूतेः शैल्यां पाण्डित्यस्य प्रतिभायाश्चापूर्वः सन्निवेशो मणिकाञ्चनसंयोग एव ।

भवभूतेः प्रतिभा उन्मुक्ता, उदात्ता चास्ति । स खलु संस्कृतसाहित्यस्य मौलिकः कलाकारो वर्त्तते ।

एवं चाभिर्विशेषताभिर्भवभूतिः संस्कृतवाङ्मये कालिदाससमकक्षं स्थानमलंकरोति ।

## ३६. नाटककारो विशाखदत्तः

विशाखदत्तस्य 'मुद्राराक्षसम्' संस्कृतनाटकेषु स्वविलक्षणतयाऽद्वितीयं स्थानं भजते । संस्कृतवाङ्मये केषाञ्चिन्नाटकानां कथानकं प्रणयमवलम्बते केषांयिच्च युद्धमाश्रयते । परमिदं नाटकं सर्वत इतिहासविषयमनुसरन्नपि प्रमुखतया राजनीत्या सम्बद्धम् । अनया दृष्ट्या इदं नाटकमप्रतिमम् ।

विशाखादत्तस्य रचनाकालः सामान्यतः ख्रिष्टाब्दषष्ठशताब्द्या उत्तरार्द्धमस्ति, यद्यपि नात्रमतैक्यम् । नाटककारः कस्मिंश्चिद् राजकुले जनिं लेभे । तस्य पितामहो बटेश्वरदत्तोऽथवा वत्सराजः कस्यचिद् देशस्य सामन्त आसीत् । जनको भास्करदत्तोऽथवा पृथुः महाराजपदवीमलभत । कौटिल्यार्थशास्त्रस्य शुक्रनीतेः, दर्शनशास्त्रस्य च स प्रकाण्डः पण्डित आसीत् । वैदिकधर्मावलम्बी सन्नपि स एतादृश उदारो यदन्यधर्मान्प्रति तस्य दृष्टिकोणो न सङ्कीर्णः । जैनधर्मं प्रति यत्तस्यानास्था प्रतीयते सा तस्य युगस्य धार्मिकभावनायाः एक उद्गारः ।

नाटकमिदं नहि रसप्रधानं प्रत्युत घटनाप्रधानम् । मुद्राराक्षसं राजनीतेः कपटप्रबन्धान्, कुमन्त्रिणश्च चारु चित्रयति । अस्य कथानकस्य केन्द्रबिन्दुर्नन्दवंशस्य महामात्यो राक्षसोऽस्ति । यस्य स्वामिभक्त्या प्रवीणतया चाकृष्टश्चाणक्यस्तं चन्द्रगुप्तस्यामात्यपदमुपहारीकरोति । परं स न उररीकरोति । इदं लक्ष्यमाश्रित्य चाणक्यराक्षसयोर्मध्ये यानि विचेष्टितानि घटितानि तानीदं नाटकमङ्कयति ।

मुद्राराक्षसेऽपि मृच्छकटिकवद् घटानानां वास्तविकं यथातथं च चित्रणमस्ति । घटनानामेकाग्रताऽपि अत्र दर्शनीया । वस्तुतस्तु अस्य नाटकस्याद्यन्तमोजस्वितामूर्जस्वलतां पौरुषं चैकान्ततो भजते । नाटकेऽस्मिन् सफलनाटकापेक्षिता सर्वेऽपि गुणाः प्राप्यन्ते । कार्यान्वितेरत्रापूर्वो निर्वाहोऽभवत् । येन नाटके प्रभावोत्पादकता नितरामुत्पन्ना ।

चरित्रचित्रणेऽपि नाटककारोऽधिकः सतर्को जागरूकश्च । तस्य पात्रसृष्टिः सजीवा व्यक्तित्वयुता च । तुलनात्मकया शैल्या स पात्राणीत्थं

चित्रयति यत्तेषां विशेषगुणाः सर्वंशो वृण्वते। चाणक्यराक्षसयोस्तुलनात्मकं चित्रणं साकल्येन सफलतामलभत्। यदि चाणक्यः स्थिरचित्तः, अनुक्षणं जागरूकः कठोरहृदयः, शाठ्यनीतिनिपुणः, दुर्दान्तस्तर्हि राक्षसोऽस्थिरचितः, विस्मरणशीलः, उदारहृदयः, सज्जनः, दमनीयः। एवं नाटककारः चन्द्रगुप्तमलयकेत्वोः, सिद्धार्थकभागुरायणयोः निपुणकविराधगुप्तयोः, जाजालिवाहिनार्योस्तुलनात्मकं चित्रणं नितरां भव्यमङ्कयति। मुद्राराक्षसे। स्त्रीपात्राणामभाव आस्ते। केवलं सप्तमेऽङ्के चन्दनदासस्य पत्नी रंगमंचेऽभिदृश्यते। विषकन्याया अपि केवलमुल्लेखमात्रमेव। शृङ्गाररसस्यात्राभावः। केवलं कतिपयेषु स्थलेषु एव राजनीतिकविषयाणां शृङ्गारिकचित्रणमवश्यमुपलभ्यते।

केचिन्मुद्राराक्षसं वीररसप्रधानं नाटकं मन्यन्ते, केचिच्च घननाप्रधानम्। वस्तुतस्तु इदं नाटकं घटनाप्रधानमेव। अत एवास्य नाटकस्य नायकश्चाणक्य एव। अन्येषां मते तु अस्य नायकश्चन्द्रगुप्तः। विदूषकाभावेऽपि अस्य नाटकस्य रोचकता अक्षुण्णा। नाटकस्य कथानकमेव एतादृशं गहनं जटिलञ्चास्ते यद् दर्शकस्य न जिज्ञासा क्वचिदुपशाम्यति, न च तस्य कौतुकं क्वचिदवस्यति। ओजस्विवातावरणस्यावतारणायां तथा वीररसस्याभिव्यञ्जनायां तत्त्वतो मुद्राराक्षसं संस्कृतवाङ्मयेऽद्वितीयं स्थानं भजते।

मुद्राराक्षसस्य शैली प्रवाहपूर्णा प्रसादगुणगुम्फिता प्रौढबला चास्ते। अदीर्घाणि अस्य लाक्षणिकानि च वाक्यानि। समासबहुला दीर्घा पदावली अप्राचुर्येण प्रयुक्ता। अलङ्कारप्रेम सीमितं रुचिकरं चास्ते। अलङ्काराः स्थाने प्रयुक्ता अपूर्वां शोभामावहन्ति। शब्दविन्यासः सशक्तो मनोहारी च। एकं पद्यमुदाह्रियते—

आस्वादितद्विरदशोणितशोणशोभां
सन्ध्यारुणामिव कलां शशलाञ्छनस्य।
जृम्भाविदारितमुखस्य मुखात् स्फुरन्तीं
को हर्तुमिच्छति हरेः परिभूय दंष्ट्राम्॥

चाणक्यस्य राजनीतेः वैचित्र्यमपि दृश्यताम्—

**मुहुर्लक्ष्योद्भेदा मुहुरधिगमाभावगहना**
**मुहुः सम्पूर्णाङ्गी मुहुरतिकृशा कार्यवशतः ।**
**मुहुर्नश्यद्बीजा मुहुरपि बहुप्रापितफले-**
**त्यहो चित्राकारा नियतिरिव नीतिर्नयविदः ॥**

चाणक्यस्य कुटीरस्य वर्णनमप्यप्रतिममास्त—

**उपलशकलमेतद् भेदकं गोमयानां,**
**बटुभिरुपहृतानां बर्हिषां स्तूपमेतत् ।**
**शरणमपि समिद्भिः शुष्यमाणाभिराभि—**
**र्विनमितपटलान्तं दृश्यते जीर्णकुड्यम् ॥**

विशाखदत्तस्यान्यदपूर्णं देवीचन्द्रगुप्तनाटकमप्युलब्धम् । यस्य वृत्तमपि राजनीतिमितिहासं चावलम्बते ।

विशाखदत्तस्य प्रतिभा उन्मुक्ता, उदात्ता चास्ति, स खलु संस्कृतसाहित्यस्य मौलिकः कलाकारो वर्तते । तदीयं मुद्राराक्षसं विश्वस्मिन्नपि जगति लब्धख्याति विश्वसाहित्येऽपूर्वं पदमलङ्करोति ।

## ३७. नाटककारो भट्टनारायणः

संस्कृतवाङ्मये वीररसप्रधानेषु नाटकेषु वेणीसंहारमतिलोकप्रियं नाटकमस्ति । नाट्यशास्त्रस्य नियमाननुसृत्य भट्टनारायणेनेदं विरचितम् । अनेन हेतुना कथानकस्य गतिरवरुद्धा । परं सन्धीनां पताकास्थानकानां च सन्निवेशः समुचित स्थानेषु सञ्जातः ।

वेणीसंहारस्य कथा महाभारतस्य वर्त्तते । राजसभायां दुःशासनेनापमानिता द्रौपदी इमां प्रतिज्ञामकरोद् यत्सा तावत्कालं स्ववेणीं न विभूषयिष्यति यावत्कालमस्य निराकरणं न भविष्यति इति हेतोः वेणीसंहारमिति नाम्नोऽन्वर्थत्वम् । इदं शीर्षकं भट्टनारायणस्योद्भावनया उद्भूतम् । महाभारते क्वचिदपि अस्योल्लेखो नास्ति । पदे पदे नवीनोद्भावना

उपलभ्यते। प्रथमाङ्के सन्धिप्रस्तावार्थं सञ्जयस्थाने श्रीकृष्णस्य प्रेषणं नूतनोद्भावनाऽस्ति। समस्तो द्वितीयाङ्कः कल्पनया प्रसूतः। तृतीयाङ्कस्य प्रवेशकः नवीनकल्पनायाः फलम्। पञ्चमाङ्कः कल्पनाया परिपूरित आस्ते। षष्ठाङ्केऽपि विविधा नूतनाः कल्पना अभिदृश्यन्ते। 'वेणीसंहारस्य' पात्राणि इतिहासप्रसिद्धानि सन्ति। परम्पराप्राप्तमेव तेषां चरित्रं परिष्कृत्य अत्र प्रस्तौति कविः। भीमसेनस्य चरित्रमतिव्यापकं, प्रभावशालि, आकर्षकञ्चास्ति। तस्यौजस्विताया अदम्यपराक्रमस्य परिचयस्तस्य भाषणैः सर्वदा व्यक्तो भवति। दुर्योधनस्य चरित्रमपि उदात्ततया परिपूरितमास्ते। तस्य चरित्रस्य सर्वाधिका विशेषता आत्मविश्वासस्यातिरेकः। पराक्रमप्रदर्शनावसरे भानुमत्या सह रतिक्रीडायाः संलापस्तस्य चरित्रं दूषयति। मम्मटोऽस्य गणना अकाण्डे प्रथनमित्यस्यान्तर्गतं मन्यते। स्वाश्रितान्प्रति तस्य हृदये महती दया खलु। तत्त्वतः स शौर्यस्य प्रतिनिधिः।

अश्वत्थामा शौर्यस्य पराक्रमस्य च सजीवा प्रतिमाऽस्ति। परं तस्य व्यक्तित्वमपूर्णमेव। कर्णस्य पिशुनतया विक्षुब्ध सः स्वान्तः सत्त्वस्य बहिः प्रदर्शनं न करोति। अदम्यशार्यस्याश्रयोऽश्वत्थामा स्वगुणानभ्यन्तरे पिण्डीकृत्य तिष्ठति।

कर्णस्य चरित्रमपि मार्मिकमास्ते। परं तस्य प्रदर्शनमेव यत्स्वरूपं यत्तस्य विकासो नाभवत्। तस्य वीरता स्पृहणीया खलु। स कूटनीतिज्ञः आत्मनिष्ठो वीरेश्वरोऽस्ति। पौरुषे तस्य महती आस्था आस्ते।

युधिष्ठिरो वीरः सन्नपि न्याप्यात्पथो न विचलति। स प्रशान्तात्मा न्यायप्रियश्चास्ते इति हेतोः स प्रयत्नेन क्रोधं वशीकरोति। अनुजान्प्रति तस्य हृदये महान् स्नेहो वर्त्तते।

द्रौपदी अपमानिता, तिरस्कृता विदलिता च नारी अस्ति। अनेन हेतुना तस्याः क्रोधावेगोऽतितीव्रः। अबलाऽपि सा पौरुषे विश्वसिति। युधिष्ठिरस्य न्यायप्रियतां सा दुर्बलतायाः प्रतीकं मन्यते। अतोऽर्थं तः स भीमस्य पराक्रमं भूरि भूरि श्लाघते। अन्यपात्राणां चरित्रचित्रणमपि व्यक्तित्वयुतं सजीवं च। एवं चरित्रचित्रणे नाटककारस्य प्रतिभाऽप्रतिमा।

आधुनिका विद्वांसो भीममस्य नाटकस्य नायकं मन्यन्ते। प्राचीना विचक्षणा युधिष्ठिरं प्रधानपात्रं स्वीकुर्वन्ति। दुर्योधनः खलु प्रतिनायकः।

वेणीसंहारस्य प्रमुखो रसो वीर एव। शृङ्गाररौद्रौ चास्याङ्गरसौ। वीररसस्यैकमुदाहरणं पर्याप्स्यति—

तातं शस्त्रग्रहणविमुखं निश्चयेनोपलभ्य,
त्यक्त्वा शंकां खलु विदधतः पाणिमस्योत्तमांगे।
अश्वत्थामा करधृतधनुः पाण्डुपाञ्चालसेना-
तुल्योत्क्षेपप्रलयपवनः किं न यातः स्मृतिं ते॥

शृङ्गाररसस्याप्येकं पद्यमुदाह्रियते—

प्रेमाबद्धस्तिमितनयनापीयमानाब्जशोभं
लज्जायोगादविशदकथां मन्दमन्दस्मितं वा।
वक्त्रेन्दुं ते नियममुषितालक्तकाग्राधरं वा
पातुं वाञ्छा परमसुलभं किं न दुर्योधनस्य॥

भीमसेनस्य प्रतिज्ञाया भव्यं चित्रमधस्तने पद्येऽवलोक्यताम्—

चञ्चद्भुजभ्रमितचण्डगदाभिघात-
संचूर्णितोरुयुगलस्य सुयोधनस्य।
स्त्यानावनद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि भीमः॥

वेणीसंहारस्य शैली गौडी प्रौढबला चास्ते। अस्याः श्लाघायां कश्चित्कविराह—

ओजः संसूचकैः शब्दैः युद्धोत्साहप्रकाशकः।
वेण्यामुज्जृम्भयन् गौडीं भट्टनारायणो बभौ॥

अलंकाराः स्थाने प्रयुक्ता अपूर्वां शोभामावहन्ति। शब्दविन्यासः सशक्तो मनोहारी च।

वस्तुतस्तु कथानकस्य शैथिल्येऽपि वेणिसंहारस्य चरित्रचित्रणं रसाभिव्यक्तिश्चाप्रतिमे स्तः इति हेतोर्भट्टनारायणस्य प्रतिभा श्लाघनीया स्पृहणीया चास्ति।

## ३८. महाकविः बाणभट्टः

बाणभट्टः संस्कृतसाहित्यस्यैकः कविः यस्य जीवनवृत्तस्य सम्बन्धेऽस्माकं पर्याप्तं ज्ञानमस्ति। तस्य पूर्वजः कुबेरः कर्मनिष्ठः, श्रुतान्वितः शास्त्राभिज्ञश्चासीत्। कुबेरस्य चत्वारः पुत्राः अच्युतः, ईशानः, हरः, पाशुपतः आसन्। पाशुपतस्य पुत्रोऽर्थपतिरभवत्। अर्थपतेरेकादशसु पुत्रेषु एकश्चित्रभानुरासीत्। अस्य चित्रभानोः सुतो बाणः। शैशवे एव बाणस्य पितरौ दिवंगतौ।

बाणस्य पार्श्वे प्रचुरा पैत्री सम्पत्तिरासीत्। संरक्षणाभावाद् बाणो देशाटनकारी सञ्जातः। बाणस्य मित्राणि एवंरूपाणि आसन् कतिपये विद्वांसः, कतिपयेचौराः कतिपये नर्तकाः, कतिपये नटाः, कतिपये ऐन्द्रजालिकाः। देशाद्देशान्तरमटन्बाणो बुद्धिसम्पन्नोऽनुभवी चाभवत्। प्रत्यावर्त्य स विद्याध्ययनमकरोत्।

बाणभट्टः श्रीहर्षवर्धनस्य राजकविरासीत्। हर्षवर्धनस्तं 'वश्यवाणी कविचक्रवर्ती' इत्युपाधिना विभूषयति स्म। अतो बाणस्य स्थितिकाल सुगमतयाऽनुमातुं शक्यते। बाणभट्टस्य स्थितिकालः ख्रिष्टाब्दपूर्वसप्तम शतकमस्ति। वामनस्य काव्यालंकारसूत्रे उद्धृतेन कादम्बर्या गद्येना कवेरस्योपर्युक्तः कालः सिध्यति।

'हर्षचरितम्' बाणस्य प्रथमा गद्यकृतिरस्ति। बाण इमामाख्यायिकामाचष्टे। ऐतिहासिककाव्यरचनाया वास्तविक आरम्भो हर्षचरिते भवति।

हर्षचरितं साहित्यिकशैलीमाश्रित्य लिखितमेकं रोचक वर्णनात्म गद्यकाव्यमस्ति। काव्यसौन्दर्यं वर्णनाशक्तिश्चात्राप्रतिमे स्तः। हर्षचरितस्य शैली आलंकारिकी कल्पनाप्रचुरा च वर्तते। तत्कालीनानां सामाजिकव्यवस्थानां, राजनीतिकादर्शानां, सामाजिकव्यवस्थानां च हर्षचरि सुन्दरं चित्रणमस्ति। भासकालिदासप्रवरसेनभट्टारहरिचन्द्राढ्यराजप्र तीनां समयनिर्धारणमप्यस्य साहाय्येन भवति। सोड्ढलो हर्षचरित मुक्तकण्ठेनेत्थं श्लाघामकरोत्—

**बाणः कवीनामिह चक्रवर्ती चकास्ति यस्योज्जवलवर्णशोभा ।**
**एकातपत्रं भुवि पुष्पभूतिवंशाश्रयं हर्षचरित्रमेव ॥**

कादम्बरी संस्कृतसाहित्यस्य सर्वोत्कृष्ट उपन्यासोऽस्ति । तस्याः समस्ता तथा कौतूहलेनापूरिता आस्ते । पाठकानामुत्कण्ठोत्तरोत्तरं वर्धते । नायिकायाः कादम्बर्या उल्लेखो मध्यस्थले कृतः कविना । महाश्वेतायाः प्रणयकथा मूलकथाया उपोद्घातत्वेन निबद्धा । कथामुखे शूद्रकस्य राजसभायामद्भुतेन तेन शुकेन सार्धमायान्त्याश्चाण्डालकन्यायाः प्रवेश ईदृग्गुह्यो यत्पाठको बलाद् रहस्यभेदायोत्कण्ठते । उपसंहारे चेदं रहस्यं भिद्यते । मूलकथाया उपकथायाश्च समन्वयः कवेर्वस्तुविन्यासकौशलं प्रकटयति ।

बाणभट्टस्य पात्राणि नहि भूलोकस्य पात्राणि, तानि तु चन्द्रलोके, गन्धर्वलोके, मर्त्यलोके चाप्रतिहतगत्या पर्यटन्ति । कथानके शाकुन्तलवत्स्वर्लोकभूलोकयोर्मिलनमास्ते । बाणस्य कृते कथातत्त्वं चरित्रचित्रणं च नहि तावती अनिवार्ये यावन्ति सन्ति विविधाप्रासंगिकवर्णनानि, यैः कादम्बरी परिपूर्णाऽस्ति । तथापि तस्य पात्राणि नहि सर्वथा व्यक्तित्वशून्यानि जीवरहितानि च । कादम्बर्या पात्राणि आदर्शवादिनो बाणस्य हस्तपुत्तलिका अवश्यमेव सन्ति, परं बाणेन तेषां सञ्चालनमियता कौशलेन कृतं यत्तानि सजीवानि व्यक्तित्वयुतानि चाभवन् । वस्तुतस्तु बाणस्य पात्रसृष्टिः सजीवा व्यक्तित्वयुता च विद्यते । प्रजापालकस्य पराक्रान्तस्य शूद्रकस्य वीराकृतिः सर्वेषां हृदये उत्साहस्य संचारं करोति । व्यवहारकुशलोऽमात्यः शुकनाशः, शुभ्रवसना तपस्विनी महाश्वेता, कमनीयकलेवरा कादम्बरी-एतानि पात्राणि पाठकानां हृदये स्वकीयमनाश्यं प्रभावमङ्कयन्ति । कादम्बर्याश्चरित्रचित्रणं कल्पनावैभवस्य वर्णनपटुतायाः मनोवृत्तीनां सूक्ष्मनिरीक्षणस्य च निदर्शनं खलु ।

बाणभट्टस्य प्रणयचित्रणमप्यत्यधिकमुदात्तं रमणीयं चास्ति । कादम्बरीचन्द्रापीडयोः प्रथममिलनप्रसङ्गे प्रथमरागोद्बोधनस्य मार्मिकचित्रणमपि दर्शनीयम्—"अथ तस्याः कुसुमायुध एव स्वेदमजनयत्,

ससंभ्रमोत्थानश्रमो व्यपदेशोऽभवत् । उरुकम्प एव गतिं रुरोध, नूपुररवा-कृष्टहंसमण्डलमपयशो लेभे निःश्वासप्रभृतिरेवांशुकं चलं चकार, चामरा-नलो निमित्ततां ययौ । अन्तःप्रविष्टचन्द्रपीडस्पर्शलोभेनैव निपपात हृदये हस्तः, स एव करः स्तनावरणव्याजो बभूव । आनन्द एवाश्रुजलमपतयत् चलितकर्णावतंसकुसुमरजो व्याजमासीत् । लज्जैव वक्तुं न ददौ, मुख-कमलपरिमलागतालिवृन्दं द्वारतामगात् । मदनशरप्रथमप्रहारवेदनैव सीत्कारमकरोत्, कुसुमप्रकरकेतकीकण्टकक्षतिः साधारणतामवाप । वेप-थुरेव करतलमकम्पयत्, निवेदनोद्यतप्रतीहारनिवारणं कपटमभूत् । तद च कादम्बरी विशतो मन्मथस्यापि मन्मथ इवाभूद् द्वितीयः, तया सह यो विवेश चन्द्रापीडहृदयम् । तथाहि असावपि तस्य रत्नाभरणद्युतिमपि तिरोधानममस्त, हृदयप्रवेशमपि परिग्रहमगणयत्, भूषणरवमपि संभाषण-मन्यत, सर्वेन्द्रियाहरणमपि प्रसादमचिन्तयत्, देहप्रभासंपर्कमपि सुरत-समागमसुखमकल्पयत् ।''

अस्मिन्नुद्धरणे कवियुंगपन्नायिकानायकयोः प्रथमदर्शनजन्यस्य रागो-द्बोधस्य चित्रणमकरोत् । महाश्वेतापुण्डरीकयोः प्रथममिलनस्य चित्रण-मप्यतिमार्मिकं भव्यं चास्ति ।

विप्रलम्भशृङ्गारस्योदाहरणे महाश्वेताविलापः कादम्बरीविरहवर्णं-च स्तः । नारीसौन्दर्यवर्णनेऽपि बाणः खलु पटुः । चाण्डालकन्याविलास-वतीवारविलासिनीप्रभृतीनां भव्यं चित्रणमस्य निदर्शनं वर्तते । बाणभट्ट कदाचित्सुखसमृद्धिसमन्वितजीवनस्य कदाचिद् भोगविलासानुरञ्जित-जीवनस्य, कदाचिच्च तपस्विजीवनस्य मार्मिकाभिव्यंजनायां निरतो खलु वस्तुतस्तु कवेरनुभवो विशालो विविधो यथार्थश्चास्ति ।

बाणभट्टस्य प्रकृतिवर्णनं विशदं, सजीवं, संश्लिष्टं चास्ति । क्वचि भीषणप्राकृतिकदृश्येषु कवेश्चेतो रमते, क्वचिदसौ प्रकृतेः रम्यरूपाण्य-प्यङ्कयति । एतेषां प्राकृतिकदृश्यानां स्वरूपस्य हृदयेऽङ्कनाय स बहुविधा-नामलंकाराणां प्रयोगमकरोत् । उपमोत्प्रेक्षापरिसंख्याविरोधाभासप्रभृती-नलंकारान् पुरस्कृत्य स वर्ण्यविषयस्य मनोहारिणीमभिव्यंजनामकरोत् ।

विन्ध्यारण्स्य भयावहतां यावत्या सफलतया कविरङ्कयति सा तत्त्वतो विस्मापिका । तपोवनस्य वर्णनमप्यप्रतिममास्ते । ऋतूनां चित्रणमप्यतिमार्मिकं विद्यते । प्रभातसन्ध्याऽन्धकारचन्द्रोदयादीनां विभिन्नप्राकृतिकदृश्यानां वर्णनमपि अतिसहृदयतया यथार्थतया च अंकयति कविः ।

अच्छोदसरोवरस्य वर्णनमपि बाणभट्टस्य निरीक्षणशक्तिप्राचुर्यस्य सुतरां बोधकम् । सायंकालस्याधस्तनं वर्णनं लोकोत्तर मास्ते—

क्वापि विहृत्य दिवसावसाने लोहिततारका तपोवनधेनुरिव कपिला परिवर्तमाना सन्ध्या तपोधनैरदृश्यत । अचिरप्रोषिते सवितरि शोकविधुरा कमलमुकुलकमण्डलूधारिणी हंसपतिदुकूलपरिधाना मृणालधवलयज्ञोपवीतिनी मधुकरमण्डलाक्षवलयमुद्वहन्ती कमलिनी दिनपतिसमागमव्रतमिवाचरत् । अपरसागराम्भसि पतिते दिवसकरे वेगोत्थितमम्भःसीकरमिव तारागणमन्वधारयत् । अचिराच्च सिद्धकन्यकाविक्षिप्तसन्ध्यार्चनकुसुमशबलमिव तारकितं वियदराजत । क्षणेन चोन्मुखेन मुनिजनेनोर्ध्वविप्रकीर्णैः प्रणामाञ्जलिसलिलैः क्षाल्यमान इवागलदखिलः सन्ध्यारागः ।"

स्थाने प्रयुक्ता अलंकारा अपूर्वां शोभामावहन्ति । उपमोत्प्रेक्षाश्लेषविरोधाभासप्रभृतीनामलंकाराणां व्यवहारो भावोद्रेकार्थं, संश्लिष्टार्थं प्रभावोत्पादकार्थं च कृतः कविना । परिसंख्याऽलंकारस्य तु बाणभट्टः सम्राट् खलु । नह्यन्येन केनचित्कविना शिष्टपरिसंख्याया एतादृशश्चमत्कारपूर्णः प्रयोगः कृतः । हर्षचरिते बाणेन आदर्शगद्यस्य ये गुणा निरूपितास्तेऽस्य गद्ये पूर्णरूपेण विद्यन्ते—

**नवोऽर्थो जातिरग्राम्या श्लेषः स्पष्टः स्फुटो रसः ।**
**विकटाक्षरबन्धश्च कृत्स्नमेकत्र दुर्लभम् ।।**

अर्थस्य नवीनता, स्वभावोक्तेः नागरिकता, श्लेषस्य स्पष्टता, रसस्य स्फुटता, अक्षरस्य च विकटबन्धता युगपत्तस्य गद्यकाव्यस्य शोभां प्रकटयन्ति । श्लेषप्रयोगेऽपि कविर्नितान्तः सफलः खलु ; 'निरन्तरश्लेषधनाः सुजातयो महास्रजश्चम्पककुड्मलैरिव' इत्युक्तिः कादम्बरीमुद्दिश्यैव कथिता तेनैव । रसनोपमाया इदमुदाहरणं कीदृङ् मनोरममस्ति—

"क्रमेण च कृतं मे वपुषि वसन्त इव मधुमासेन, मधुमास इव नवपल्लवेन, नवपल्लव इव कुसुमेन, कुसुम इव मधुकरेण, मधुकर इव मदेन नवयोवनेन पदम् ।"

परिसंख्याया अयं मनोहारी प्रयोगो विदग्धानां हृदयं नितान्तमावर्जयति यत्र बाणभट्टो जाबालेराश्रमस्य सुन्दरं चित्रमङ्कयति—

"यत्र च महाभारते शकुनिवधः, पुराणे वायुप्रलपितं, वयः परिणामे द्विजपतनम्, उपवनचन्दनेषु जाड्यम्, अग्नीनां भूमिमत्त्वमेणकानां गीतव्यसनं, शिखण्डिनां नृत्यपक्षपातः, भुजङ्गमानां भोगः, कपीनां श्रीफलाभिलाषः, मूलानामधोगतिः ।"

कादम्बर्यां हृदयपक्षस्य प्राधान्यमस्ति । मानवीयभावानामभिव्यक्तौ कोमलमनोभावानां च मार्मिकविश्लेषणे बाणोऽद्वितीयः खलु । कस्या अपि मनोदशाया विस्तृतं, विशदं, सजीवं च वर्णनं बाणभट्टस्य विशेषताऽऽस्ते । भावगाम्भीर्येऽप्रतिमः खलु कविः ।

बाणभट्टस्य शैली गद्यकवीनां कृते आदर्शभूताऽस्ति । अस्य लेखनशैली विषयवर्णनस्य नितान्तमनुरूपा खलु । चित्रणस्य सजीवतां प्रभावशालितां चोत्पादयितुं कविः समासबहुलामोजगुणमण्डितां च शैलीं स्थाने स्थानेऽवश्यमाश्रयते । परमन्यत्रादीर्घवाक्यानि प्रयुज्य स स्वशैलीं सशक्तां मार्मिकां चाकरोत् । कपिञ्जलो ब्रह्मचारी मदनव्यथसंतप्त पुण्डरीकं भर्त्सयति—

"सखे पुण्डरीक, नैतदनुरूपं भवतः । क्षुद्रजनक्षुण्ण एष मार्गः । धैर्यधना हि साधवः । किं यः कश्चित्प्राकृत इव विकलीभवन्तमात्मान न रुणत्सि । क्व ते तद् धैर्यम् । क्वासौ इन्द्रियजयः ।"

तत्त्वतो बाणस्य गद्यशैल्यां वर्ण्यविषये चाद्भुतम् सामञ्जस्यं विद्यते । राजशेखरस्य मते बाणभट्टस्य शैली पाञ्चाली खलु—

**शब्दार्थयो. समो गुम्फ पाञ्चाली रीतिरिष्यते ।**
**शिलाभट्टारिकावाचि बाणोक्तिषु च सा यदि ।।**

बाणभट्टस्य वर्णने स्निग्धता, रुचिरतां, चिक्कणता च गोचरीभवन्ति ।

'कथितपदता' तु गवेष्यमाणाऽपि न क्वचित्प्रत्यक्षीभवति । नवपदविन्यसो, नूतनाऽर्थाभिव्यक्तिः, मंजुला भावभंगी च पदे पदे पाठकानां चित्तमावर्जयन्ति ।

इमे एव सन्ति ते गुणा यैराकृष्टो धर्मदास आह --

**रुचिरस्वरवर्णपदा रसभाववती जगन्मनो हरति ।**
**सा किं तरुणी ? नहि नहि वाणी बाणस्य मधुरशीलस्य ।।**

## ३६. महाकविः श्रीहर्षः

माधानन्तरं विरचितेषु महाकाव्येषु ह्रासयुगमाविर्भवति । अस्मिन् युगे वास्तविकी सृजनशक्तिर्न संलक्ष्यते । सकलमपि साहित्यमनुकरणात्मकं वर्तते । काव्येषु स्वतन्त्रकविताशक्तिः कल्पनावेगो वा न गोचरीभवति । एतेषु ह्रासकालीनेषु कविषु रत्नाकरकविराजादीनां नामान्युल्लेखनीयानि सन्ति । श्रीहर्ष एतेषु उत्तरकालीनेषु कविषु उत्कृष्टतमं पदमलंकरोति । अस्य प्रसिद्धं महाकाव्यं नैषधीयचरितं बृहत्त्रय्यां प्राप्तपदमस्ति । श्रीहर्षोऽन्यानप्यनेकान् ग्रन्थानरचयत् ।

श्रीहर्षो द्वादशशताब्द्यां कान्यकुब्ज (कन्नौज) नृपतेर्जयचन्द्रस्य राजकविरासीत् । तत्र सोऽपूर्वमान्यत्वमलभत । अधस्तने श्लोके तस्याभिव्यक्तिः सुष्ठु कृता श्रीहर्षेण—

**ताम्बूलद्वयमासनञ्च लभते यः कान्यकुब्जेश्वरात**
**यः साक्षात्कुरुते समाधिषु परं ब्रह्मप्रमोदार्णवम् ।**
**यत्काव्य मधुवर्षि धर्षितपरास्तर्केषु यस्योक्तयः**
**श्रीश्रीहर्षकवेः कृतिः कृतिमुदे तस्याभ्युदीयादियम् ।।**

काश्मीरे तस्य महाकाव्यं महतीं श्लाघामलभत—"काश्मीरैर्महिते चतुर्दशतयीं विद्यां विदद्भिर्महा ।" श्रीहर्षो नहि केवलं सर्वोत्कृष्टो महाकविरेवासीत्प्रत्युत स प्रकाण्डः पण्डितोऽपि । पाण्डित्यवैदग्धयोः श्रीहर्षोऽनुपमं निदर्शनमस्ति । यः श्रीहर्षः काव्यकलाया अप्रितमं शृङ्गारभूतं

नैषधीयकाव्यमगुम्फत् स एव प्रखरपाण्डित्यस्य चूडान्तं निदर्शनरूपं 'खण्डनखण्डखाद्यम्' अरचयत्। यः श्रीहर्षो नैषधीयचरितं लिखित्वा काश्मीरे निजविमलकीर्तिपताकां निचखान स एव कान्यकुब्जेश्वरस्य सभायां स्वजनकस्य विजेतारं तार्किकप्रकाण्डमुदयन पराजयत।

श्रीहर्षस्य दार्शनिकज्ञानं नितान्तं प्रौढमुत्कृष्टं चास्ते। संस्कृतवाङ्मये श्रीहर्षमन्तरा नह्यन्यः कश्चित्कविरुपलभ्यते, यस्मिन् कवित्वदार्शनिकत्वयोः प्रतिभापाण्डित्योश्च ईदृशो मञ्जुलः समावेशोऽस्ति। षड्दर्शनस्य तस्य ज्ञान चतुरस्रं खलु। अद्वैतवेदान्तस्य स प्रौढ आचार्योऽस्ति। नैषधीयचरितस्य सप्तदशसंख्यकः सर्गः कस्यचिद् दर्शनग्रन्थस्य अंशः प्रतीयते। अयं सर्गो दार्शनिकपाण्डित्यस्य निकषग्रावा आस्ते। अद्वैतवेदान्ते श्रीहर्षस्य महती आस्था वर्त्तते।

साप्तुं प्रयच्छति न पक्षचतुष्टये तां
तल्लाभशंसिनि न पञ्चमकोटिमात्रे।
श्रद्धां दधे निषधराड् विमतौ मतानाम्—
द्वैततत्त्व इव सत्यतरेऽपि लोकः॥

श्रीहर्षस्य काव्यादर्शः कालिदासस्य रघुवंशम् माघस्य च शिशुपालवधं वर्तते। इदं तुलनया स्फुटीभवति। दमयन्तीस्वयंवरस्य कल्पना इन्दुमतीस्वयंवरमाश्रयते। नैषधीयचरितस्य एकादशसंख्यकस्य सर्गस्य प्रभातवर्णनं शिशुपालवधमनुकरोति।

सुन्दरः शब्दविन्यासः, समुचितो भावनिर्वाहः, अपूर्वं कल्पनोड्डयनं, सजीवम् प्रकृतिचित्रणं चास्य महाकाव्यस्यापूर्वां शोभामावहन्ति। वस्तुतस्तु संस्कृतवाङ्मये एतन्महाकाव्यमप्रतिमं स्थानं भजते। अस्य सरसता, भावोद्रेकता च कस्य सहृदयस्य चित्तं नापहरतः। शब्दार्थयोर्नवीनत्वं सर्वत्र दृश्यते। तत्त्वतो नैषधीयचरितम् 'एकामत्यजतो नवार्थघटनाम्' इत्यस्य सार्थकमुदाहरणमस्ति। शब्दालंकृतानां मधुरो झंकारोऽपि अस्मन्मनांसि मोहयति। कवेः पदलालित्यमनुत्तमं वर्तते—'नैषधे पदलालित्यम्।' वस्तुतोऽनुप्रासस्य चमत्कारोऽप्रतिमो वर्त्तते। एकं पदमुदाह्रियते—

**देवी पवित्रितचतुर्भुजवामभागा वागालपत्पुनरिमां गरिमाभिरामाम् ।**
**एतस्य निष्कृपकृपाणसनाथपाणेः पाणिग्रहादनुगृहाण गणं गुणानाम ।।**

स्थाने प्रयुक्ता अलङ्कारा अपूर्वां शोभामावहन्ति । यमकालंकारस्यैकमुदाहरणं प्रस्तूयते—

**लोकेशकेशवशिवानपि यश्चकार शृङ्गारसान्तरभृशान्तरशान्तभावान् ।**
**पञ्चेन्द्रियाणि जगतामिषुपञ्चकेन संक्षोभयन् वितनुतां वितनुर्मुदं वः ।।**

उत्प्रेक्षालङ्कारस्योप्येकं पद्यं दर्शनीयम्—

**निलीयते ह्रीविधुरः स्वजैत्रं श्रुत्वाविधुस्तस्य मुखं मुखान्नः**
**सूरे समुद्रस्य कदापि पूरे कदाचिदभ्रभ्रमदभ्रगर्भे ।।**

वस्तुतः श्रीहर्षस्य श्लेषेयमकानुप्रासेषु महती प्रवृत्तिरस्ति । स स्वकृतिं 'परीरम्भक्रीडाचरणशरणा' इति मन्यते । त्रयोदशे सर्गे श्लेषालङ्कारस्य चमत्कारो दर्शनीयः । यत्रैकस्मिन् पद्ये पञ्च प्रस्तुनार्थाः विद्यन्ते ।

श्रीहर्षः स्वमहाकाव्यं 'शृङ्गारामृतशीतगुः' इति चोद्‌घुष्यते स्म । रमणरूपचित्रणे शृङ्गाररसस्य मधुरव्यञ्जनायां कवेः सहृदयता सर्वत्र दृग्गोचरीभवति । अधस्तने पद्ये दमयन्त्या अलौकिकस्य सौन्दर्यस्य कीदृगनुपमं चित्रणमस्ति—

**हृतसारमिवेन्दुमण्डलं दमयन्तीवदनाय वेधसा ।**
**कृतमध्यबिलं विलोक्यते धृतगम्भीरखनीखनीलिम ।।**

शृङ्गाररसस्याप्येकं पद्यमुदाह्रियते—

**तां मिथोऽभिदधतीं सखीं प्रियस्यात्मनश्च स निशाविचेष्टितम् ।**
**पार्श्वगः सुरवरात्तिपिधां दधदृश्यतां श्रुतकथो हसन् गतः ।।**

विप्रलम्भशृङ्गारस्याप्येकं पद्यं दृष्टव्यम्—

**स्मरहुताशनदीपितया तया बहु मुहुः सरसं सरसीरुहम् ।**
**श्रयितुमर्धपथे कृतमन्तरा श्वसितनिर्मितमर्मरमुज्झितम् ।।**

अधस्तने पद्ये श्रीहर्षस्य कल्पनायाश्चमत्कारोऽपि द्रष्टव्यः—

**निविशते यदि शूकशिखा पदे सृजति सा कियतीमिव न व्यथाम् ।**
**मृदुतनोर्वितनोतु कथं न तामवनिभृत्तु निविश्य हृदिस्थितः ।**

दमयन्त्या नखशिखवर्णनस्य सम्पेषणं सीमानमतिगच्छति। अन्येषां रसानामपि तस्य कृतिषु उन्मीलनमस्ति। 'वैदर्भी गुणैरुदारैरित्युक्त्या प्रतीयते यत् श्रीहर्षस्य शैली वैदर्भी।

योऽप्रस्तुतविधानसंग्रहः कृतः कविना स नितरां रुचिकरोऽस्ति—

**ऊध्र्वार्पितन्युब्जकटाहकल्पे यद् व्योम्नि दीपेन दिनाधिपेन।**
**न्यधायि तद्धूममिलद्गुरुत्वं भूमौ तमःकज्जलमस्खलत्किम्॥**

सन्ध्याकालस्य रागस्य कीदृक् चमत्कारपूर्णं वर्णनमधस्ते पद्यमस्ति—

**कालः किरातः स्फुटपद्मकस्य वधं व्यधाद्यस्य दिनद्विपस्य।**
**तस्यैव सन्ध्या रुचिरास्रधारा ताराश्च कुम्भस्थलमुक्तकानि॥**

एभिरेव गुणैः श्रीहर्षः सर्वोत्तमः कविरजायतः माघभारविभ्यामपि स विशिष्टः। तथाहि—

**तावद्भा भारवेर्भाति यावन्माघस्य नोदयः।**
**उदिते नैषधे काव्ये क्व माघः क्व च भारविः॥**

परमियमुक्तिर्नाधुनिकानां मते यथार्थोक्तिः। कामं सन्तु श्रीहर्षे कथिता गुणाः, परमेषां सीमोल्लंघस्तस्य कवितायां दोषमुत्पादयति। यदि श्रीहर्षः पूर्ववर्तिनां कवीनां गुणान् निजकाव्ये समावेशयत् तदीयदोषानपि सोऽनावश्यकतया प्रगुणयाञ्चकार। तस्य काव्ये मौलिकताया अभाव एव सर्वप्रथमं महान्दोषः। यतो हि तत्काव्यं कालिदासमाघयोः कवितामनुसरति सर्वांशतया। अन्यच्च तस्मिन्न तथा काव्यप्रतिभा समुल्लसति यथा पाण्डित्यस्य महिमा। तस्य शब्दक्रीडा भाषायाश्च सम्पेषणं, सीमानमतिगच्छति। तस्य कविता यां न स्वतः प्रसृतानां भावनामुद्रेकः, अपितु साश्रमसाध्या पाडित्यभाराक्रान्ता चास्ति। श्रीहर्षस्य कृते न मूलकथा तावत्यनिवार्या यावन्ति सन्ति विविधाप्रासंगिकवर्णनानि, यैः हर्षकाव्यं परिपूर्णमस्ति।

तथापि श्रीहर्षस्य गुणा नोपेक्षितुं शक्यन्ते। तस्याः परिमिता कल्पनाशक्तिरुत्पेक्षाप्रतिभा, पदानामनुपमं लालित्यं भाषायामपूर्वोऽधिकारः शब्दानाञ्चानन्तः कोशः नितान्तं श्लाघ्या गुणाः। दर्शननाट्यशास्त्रकाम-

शास्त्रव्याकरणशास्त्रसंगीतशास्त्रालंकारशास्त्रादिविषयेषु तस्य पारङ्ग-तत्वं विशिष्टस्थलेषु प्रत्यक्षीभवति ।

इमे एव सन्ति ते गुणा यैराकृष्टास्तस्य भक्ता आहुः—

**दिते नैषधे काव्ये क्व माघः क्व च भारविः ।**

# ४०. महाकविर्भारविः

कालिदासपरवर्त्तिषु कविषु भारवेर्नाम अग्रगण्यं वर्त्तते । कवित्व शक्तेर्दृष्ट्या संस्कृते तस्य स्थानमुत्कृष्टमास्ते ।

चतुस्त्रिंशदुत्तरषट्शततमे (६३४ तमे) ख्रिष्टाब्दे दाक्षिणात्यस्य चालुक्यवंशीयस्य, नृपस्य पुलकेशिद्वितीयस्य ऐहोलशिलालेखे कालिदासेन सह भारवेरपि उल्लेखो वर्त्तते—

**येनायोजि नवेश्ऽश्मस्थिरमर्थविधौ विवेकिना जिनवेश्म ।**
**स विजयतां रविकीर्तिः कविताश्रितकालिदासभारविकीर्तिः ।।**

अयं शिलालेखो दक्षिणस्य बीजापुरमण्डलान्तर्गतस्यैहोलनामकग्राम-स्य जैनमन्दिरादुपलब्धः । अस्य शिलालेखस्य समयश्चतुस्त्रिंशदुत्तरषट् शततमः ख्रिष्टाब्दोऽस्ति । अनेन एतावत्तु निश्चितमेव यदयं कविस्ततः प्रागेव विपुलां कीर्तिमलभत ।

अवन्तीसुन्दरीकथानुसारं भारविर्दक्षिणभारतस्य निवासी आसीत् । पुलकेशिद्वितीयस्यानुजस्य विष्णुवर्धनस्यायं सभापण्डित आसीत् । भारवि-रनन्यः शिवभक्तो नीतिमर्मज्ञश्चासीत् । उज्जयिनीसभां कालिदास इव भारविरपि उत्ततार ।

अधस्तनेन पद्येन भारविः 'आतपत्रभारविः' इति प्रसिद्धिमुपगतः ।

**उत्फुल्लस्थलनलिनीवनादमुष्मादुद्भूतः सरसिजसम्भवः परागः ।**
**वात्याभिर्वियति विवर्तितः समन्तादाधत्त कनकमयातपत्रलक्ष्मीम् ।।**

भारवेरेकमात्रं काव्यं तदीयं किरातार्जुनीयमस्ति । अस्य कथा महाभारतमूला वर्त्तते । संस्कृतबृहत्त्रय्यामस्य काव्यस्य प्रथमं स्थान-

मस्ति । काव्येऽस्मिन्महाकाव्यस्य सर्वाण्यापि काव्यशास्त्रनिर्दिष्टानि लक्षणानि संघटन्ते । ऋतुपर्वतसूर्यास्तमनजलक्रीडाप्रभृतीनां वर्णनं महाकाव्यानुरूपम् । किरातार्जुनीयं श्रीशब्देन प्रारभ्यते एवं प्रत्येकसर्गस्यान्तिमः श्लोकः लक्ष्मीशब्देन च परिसमाप्यते ।

"भारवेरर्थगौरवम्" इति प्रचलितया उक्त्या किरातार्जुनीयस्यार्थगौरवं स्वतः सिद्धम् । प्रतिपदमयं गुणस्तस्मिन् स्फुटीभवति ।

भीमस्य वक्तृत्वं श्लाघमानो युधिष्ठिरो यान् शब्दान्प्रायुङ्क्त ते अक्षरशः किरातार्जुनीये संघटन्ते—

**स्फुटता न पदैरपाकृता न च न स्वीकृतमर्थगौरवम् ।**
**रचिता पृथगर्थता गिरां न च सामर्थ्यमपोहितं क्वचित् ॥**

कवेरलङ्कारप्रेम सर्वत्र दृश्यते । चतुर्थे सर्गे शरत्कालस्य वर्णनं स्वाभाविकं हृदयहारि च । श्लेषयमकोपमाप्रभृतीनामलङ्काराणां प्रयोगो भावोद्रकायैव, परं क्वचित्त इदमलंकारप्रेम मोहत्त्वमुपगच्छति । चित्रकाव्यनैपुण्यप्रदर्शनार्थं लिखिते सकलेऽप्येकस्मिन् पञ्चदशे सर्गे सर्वतोभद्रादिविविधबन्धानां कौतुकमवश्यमेव श्लाघ्यमासीत्तत्कालीनानां कृते । परमद्यतनानां रुचिन कथमपि शमयत्येषा निपुणा प्रवृत्तिः । आश्चर्यत्विदं शब्दालंकारनैपुण्यप्रदर्शनं युद्धप्रसंगे कृतं कविना ।

भारवेरधस्तने एकाक्षरे श्लोके कीदृकचमत्कारः यस्मिन्नेकाक्षरः नकार एव प्रयुक्तः ।

**न नोननुन्नो नुन्नोनो नाना नानानना ननु ।**
**नुन्नोऽनुन्नो ननुन्नेनो नानेना नुन्ननुन्ननुत् ॥**

एतादृशेषु स्थलेषु तस्य काव्यं क्लिष्टत्वमभजत ।

किरातार्जुनीयस्याद्यास्त्रयः सर्गा अतिक्लिष्टा अतस्ते 'पाषाणत्रयम्' इति नाम्ना प्रख्याताः । अतो निमित्तं मल्लिनाथो भारवेः काव्यं नारिकेलफलेनोपमिमीते । यस्य बाह्यं स्वरूपं रूक्षं नीरसं च परमन्तः काव्यस्य सरसता विद्यते ।

**नारिकेलफलसम्मितं वचो भारवेः सपदि तद्विभज्यते ।**
**स्वादयन्तु रसगर्भनिर्भरं सारमस्य रसिका यथेप्सितम् ॥**

तथापि तस्य कवित्वस्य विचित्रश्चमत्कारो मनोरमं गम्भीरं च बलात्पाठकाना हृदयमाकर्षतः ।

किराताजुर्नीयस्य महत्त्वं न तथाऽस्य कथाया लालित्याद् हेतोर्यथाऽस्य विविधप्रासङ्गिकवर्णनानां कारणं विद्यते। एतादृशेषु वर्णनेषु हिमालयस्य सूर्यास्तवेलायाः, जलक्रीडायास्तपस्यतोऽर्जुनस्य, विरहन्तीनां सुराङ्गनानां, किराताजुर्नीययोर्युद्धस्य वर्णनानि प्रधानतयाऽऽकर्षकाणि सन्ति । वीररसोऽस्मिन् प्रधानस्तस्मिश्च कविः पूर्णतया सफलीबभूव ।

भारविर्नीतशास्त्रस्यालङ्कारशास्त्रस्य व्याकरणशास्त्रस्य च मर्मज्ञोऽस्ति । राजनीतिज्ञानं तु तस्य युधिष्ठिरस्योक्तिषु स्फुटं परिलक्ष्यते। कामशास्त्रस्यापि सोऽभिज्ञाता। कालिदासः प्रणयस्य (Sentiment of love) कविः भारविः प्रणयकलायाः (Art of love technique of love) कविः। भारवेर्माघस्य श्रीहर्षस्य च शृङ्गारवर्णनानि यादृशानि वासनाजन्यानि कालिदासस्यापि तादृशानि । भारवेः शृङ्गाररस्यैकं मनोहारि चित्रं प्रस्तूयते—

**व्यपोहितुं लोचनतो मखानिलैरपार्यन्त किल पुष्पजं रजः ।**
**पयोधरेणोरसि काचिदुन्मनाः प्रियं जघानोन्नतपीवरस्तनी ।।**

महाकाव्यानामितिहासे भारविरलंकृतकाव्यशैल्याः प्रवर्त्तकः। किराताजुर्नीयमलंकारैः, प्राकृतवर्णनैः, शाब्दिकचमत्कारैश्चालंकरणस्य सर्वप्रथमं निदर्शनम् । तदुत्तरवर्त्तिभिः कविभिरियं शैली अधिकतयाऽनुसृता । परं किराताजुर्नीये पाण्डित्यप्रदर्शनस्य प्रवृत्तिर्न तथा चरमसीमानं प्राप्ता यथा तदुत्तरवर्त्तिनां काव्येषु परिलक्ष्यते। अन्यच्च कवेरर्थगाम्भीर्यं, वास्तविकी च कवित्वप्रतिभा, तदीय काव्यस्य कतिपयान्दोषान् संमार्ष्टुं शक्नुतः, अनयोश्च गुणयोरभाव उत्तरवर्तिकविषु तदीयदोषान्गुणयति ।

कवित्वदृष्ट्या भारवेः स्थानम् कालिदासस्यानन्तरं महत्वपूर्णमस्ति ।

# ४१. महाकविर्माघः

कलायाः शैल्याश्च दृष्ट्या माघस्य शिशुपालवधं महाकाव्यं संस्कृतेऽपूर्वं स्थानमर्हति। अस्य महाकाव्यस्य गणना बृहत्त्रय्यां विशिष्टत्वेन भवति।

माघस्य रचनाकालविषये महानस्ति मतभेदः। सामान्यतः सोऽष्टमशताब्द्यां विद्यमान आसीद् इतिविदुषां मतम्।

शिशुपालवधातिरिक्तं माघस्यान्या काचिदपि रचना नोपलभ्यते। माघो वैष्णव आसीद् भारविश्च शैवः। एतदर्थं शिशुपालवधस्य कथा विष्णुसम्बन्धिनी। माघः स्वसांप्रदायिकप्रेम्णा प्रेरितो भारविमवनमयितुं दीर्घं प्रयासमकरोत्। तत्कीर्त्त्यपहरणाय माघोऽधिकः प्रयत्नशीलो दृश्यते।

माघस्य काव्यादर्शो भारवेः किरातार्जुनीयमासीत्। तदीयकाव्यस्य सकलाऽपि योजना भारविकाव्यमनुकरोति। इदं च द्वयोः काव्ययोस्तुलनया स्फुटीभवति। द्वेऽपि महाकाव्यमहाभारतमूले स्तः। द्वयोरारम्भः श्रीशब्देन भवति। द्वयोः सर्गान्तपद्येषु श्रीशब्दस्य प्रयोगोऽस्ति। द्वयोः प्रथमसर्गे संदेशकथनम्। द्वयोरपि द्वितीयसर्गौ समानविषयौ तुल्यरीतिकौ च स्तः।

किरातार्जुनीयमनुकुर्वन्नपि माघः स्वकाव्येऽलौकिकतामुत्पादयामास। शिशुपालवधस्येतिवृत्तं भारविकाव्यस्येतिवृत्तादल्पकायम्। एतावन्मात्रं स्वल्पतनु इतिवृत्तमाश्रित्य विंशतिसर्गात्मकस्य महाकाव्यस्य निर्माणं माघस्य कृत्रिमतायाः कलानिपुणतायाश्च प्रमाणम्। माघकाव्यस्य महत्त्वं न तथास्य कथाया लालित्याद् हेतोर्यथाऽस्य विविधाप्रासङ्गिकवर्णनानां कारणाद्विद्यते। तस्य काव्यमुदात्तकलाशैल्याश्चरमं निदर्शनमस्ति। शैल्या असाधारणताऽद्भुतता च प्रतिपदं स्फुटीभवति। रसपरिपाकोऽलङ्कारसन्निवेशश्च पदे पदे काव्यश्रियं पुष्यतः।

माघस्य वर्णनशक्तिः सजीवाऽऽस्ते। तस्य निरीक्षणसामर्थ्यमपि श्लाघ्यम् खलु। कल्पनाशक्तिरप्यप्रतिमा वर्त्तते। अस्याः शक्तेश्चूडान्तं निदर्शनं कवेर्गिरिवर्णनात्मके पद्येऽस्मिन् संलक्ष्यते—

उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम् ।
वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम् ॥

अनयैव उत्प्रेक्षया माघः 'घण्टामाघः' इति प्रसिद्धिमुपगतः । कल्पनाशक्तेश्चमत्कारस्यैकमन्यदुदाहरणं प्रस्तूयते—

उदयशिखरिशृङ्गप्रांगणेष्वेव रिंगन्, सकमलमुखहासं वीक्षितः पद्मिनीभिः ।
विततमृदुकराग्रः शब्दयन्त्या वयोभिः, परिपतति दिवोऽङ्के हेलया बालसूर्यः ॥

अत्र माघस्य प्रकृतिवर्णनमपि दर्शनीयम् । शब्दालंकृतीनां मधुरो झङ्कारोऽपि अस्मन्मनांसि मोहयति । कवेः पदलालित्यमनुत्तमं वर्त्तते । अनुप्रासस्य पदलालित्यं अधस्तने श्लोके कीदृङ् मनोहारि—

मधुरया मधुबोधितमाधवीमधुसमृद्धिसमेधितमेधया ।
मधुकरांगनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे ॥

माघस्य शृङ्गारिकपदानां स्निग्धताऽपि पाठकानां हृदयमाकर्षति—

यां यां प्रियः प्रैक्षत कातराक्षीं सा सा ह्रिया नम्रमुखी बभूव ।
निशङ्कमन्याः सममाहितेर्ष्यास्तत्रान्तरे जघ्नुरमुं कटाक्षैः ।

माघस्योपमा अप्यप्रतिमाः । रमणीयोपमानां नास्ति तत्राभावः । माघस्यार्थगौरवमपि श्लाघ्यम् । माघस्य पदशय्या ईदृशी शोभनाऽस्ति यत्किञ्चदपि शब्दः स्थानान्तरे कर्त्तुं न शक्यते । एभिरेव गुणैर्माघ उत्तरकालीनानां कवीनां कृते सर्वोत्तमः कविरजायत, अभवच्च स तेषामादर्शः, कालिदासभारविदण्डिभ्योऽपि विशिष्टः । तथाहि—

उपमा कालिदासस्य भारवेरर्थगौरवम् ।
दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः ॥

माघस्य भाषायामपूर्वोऽधिकारः शब्दावल्याश्चानन्तः कोशः । संस्कृतसमालोचकैस्तु अस्य श्लाघायामिदमुद्घोषितम् —

नवसर्गगते माघे नवशब्दो न विद्यते ।

परमीदृशी श्लाघा आधुनिकानां मते न यथार्था । कामं सन्तु माघे त्रयोऽपि गुणाः । परमेषां गुणानां सीमोल्लङ्घस्तस्य कवितायां दोषमुत्पादयति । यदि माघः पूर्ववर्त्तिनां कवीनां गुणान् निजकाव्ये समावेशयत

तदा नदीयदोषानपि सोऽनावश्यकतया प्रगुणयाञ्चकार। तस्य काव्ये मौलिकताया अभाव एव सर्वप्रथमं महान्दोषः, यतो हि तत्काव्यं भारवेः कवितामनुसरति सर्वांशतया। अन्यच्च तस्मिन्न तथा काव्यप्रतिभा समुल्लसति यथा पाण्डित्यस्य महिमा। तस्य शब्दक्रीडा भाषायाश्च सम्पेषणा सीमानमतिगच्छति। तस्य कविता न स्वतः प्रसृतानां भावनामुद्रेकः, अपि तु श्रमसाध्या पाण्डित्यभाराक्रान्ता चास्ति।

कवेः शब्दक्रीडा एकोनविंशे सर्गे दृश्यते। माघस्य कृते न मूलकथा तावत्यनिवार्या यावन्ति सन्ति विविधाप्रासङ्गिकवर्णनानि, यैर्माघकाव्यं परिपूर्णमस्ति।

तथापि माघे ईदृशा गुणाः सन्ति ये नोपेक्षितुं शक्यन्ते। तस्यापरिमिता कल्पनाशक्तिरुत्प्रेक्षाप्रतिभा, पदानामनुपमं लालित्यं, भाषायामपूर्वोऽधिकारः, शब्दावल्याश्चानन्तः कोशो नितान्तं श्लाघ्या गुणाः। तस्य पाण्डित्यं पदे पदे प्रस्फुटीभवति। बौद्धदर्शननाट्यशास्त्रव्याकरणसंगीतशास्त्रालंकारशास्त्रराजनीत्यादिविषयेषु तस्य पारङ्गतत्वं विशिष्टिस्थलेषु प्रत्यक्षीभवति।

एभिरेव विशिष्टैर्गुणैः समाकृष्टैस्तस्य भक्तैरियमुद्घोषणा कृता—

**तावद्भा भारवेर्भाति यावन्माघस्य नोदयः।**

## ४२. संस्कृतसाहित्ये कवयित्र्यः

कवितासंगीतचित्रकलाप्रभृतयो ललितकलाः नारीहृदयस्य कोमलतां स्पृष्ट्वाऽधिकतमां सरसतां गृह्णन्ति। संस्कृतसाहित्येऽपि कवयित्र्यः कमनीयां, कोमलाञ्च कवितां निर्ममिरे तदीयैः कतिपय—विकीर्णगद्यपद्यरचनाभिः श्लोकैश्चेदं निश्चीयते वैदिककालेऽपि नार्यः कविताया: क्षेत्रेऽवातरन्निति कतिपयैर्घोषाविश्ववारादिभिः ऋषिभिर्नारीभिः प्रकटितैः ऋग्वेदसूक्तै रनुमातुं शक्यते। कवित्वदृष्टयाऽपि एता ऋचः सर्वोत्कृष्टाः खलु।

कवयित्रीणां विषयेऽस्माकं ज्ञानमेकमात्रं सुभाषितग्रन्थेष्वेवाचारितं वर्तते। यद्यपि तत्रापि तासां न पर्याप्तम् प्रातिनिध्यं विद्यते। सुभाषितावलिसदुक्ति—कर्णभृतसूक्तिमुक्तावल्यादिसुभाषितग्रन्थेषु चत्वारिंशत्कवयित्रीणामुल्लेखोऽस्ति। तासां च पञ्चाशदुत्तरशताधिकाः श्लोका एषु ग्रन्थेषु उद्धृताः सन्ति।

आसु कवयित्रीषु विज्जकाविकटनितम्बाशीलाभट्टारिकगंगादेवीभावदेवीगौरीपद्मावतीविद्यावतीसुभद्राऽनंगलेखाज्ञानसुन्दरीप्रभृतीनां नामान्युल्लेखनीयानि यासां सुभाषितपद्यानि एषु ग्रन्थेषूद्धृतानि सन्ति।

विज्जकाया इयं गर्वोक्तिः कीदृशी चमत्कारिणी—

**एकोऽभून्नलिनात् ततश्च पुलिनाद् वल्मीकतश्चापरे**
**ते सर्वे कवयो भवन्ति गुरवस्तेभ्यो नमस्कुर्महे।**
**अर्वाञ्चो यदि गद्यपद्यरचनैश्चेतश्चमत्कुर्वते,**
**तेषां मूर्ध्नि ददामि वामचरणं कर्णाटराजप्रिया॥**

इयं कर्णाटदेशीयाऽऽसीत्। अस्याः स्थितिकालः ख्रिष्टाब्दपूर्वसप्तमशतकम्।

विकटनितम्बा काश्मीरे जन्म लेभे। सूक्तिमुक्तावल्यां राजशेखरस्यास्मिन् श्लोकेऽस्या उल्लेखोऽस्ति—

**के वैकटनितम्बेन गिरां गुम्फेन रंजिताः।**
**निन्दन्ति निजकान्तानां न मौग्ध्यमधुरं वचः॥**

शीलाभट्टारिकाऽपि काश्मीरी आसीत्। अस्या रचनायां माधुर्य, शब्दसौष्ठवं, भावरमणीयत्वं च लक्ष्यन्ते। तिरुमालाम्बाया वरदाम्बिकापरिणयश्चम्पूकाव्येषूत्कृष्टं स्थानं भजते। वीरकम्पनस्य राज्ञी गंगादेवी मथुराविजयं वीरकम्परायचरितपराभिधं काव्यमरचयत्। इदं काव्यमैतिहासिककाव्येषूत्कृष्टमास्ते। इदं काव्यं साहित्यिकदृष्ट्या यादृशं सौन्दर्यमावहति तादृशमेवैतिहासिकदृष्ट्याऽपि प्रामाणिकम्। अस्य काव्यस्य वैदर्भी शैली सहृदयानां हृदयं सततमावर्जयति। शाब्दिकचमत्कारोऽलंकाराणां स्थाने प्रयोगश्च श्लाघनीयौ। प्रकृतिवर्णनं विशदं, सजीवं,

सश्लिष्टं चास्ति। कवितायां नैसर्गिकः प्रवाहः, अप्रतिमा भावव्यंजना च नारीहृदस्य कोमलतां प्रकटयतः। अतोऽल्पसंख्यकाऽपीयं कविता ग्राह्या, रोचिका, सरसा चास्ते। अस्याः सरला शैली पाण्डित्योन्मुक्ता च भाषा नितरां मनोरमा—

वनभुवः परितः पवनेरितैर्नवजपाकुसुमैः कुलदीपिकाः।
प्रथममेव नृपस्य निदेशतो विजयिनस्तुरगाननिराजयन्॥

इयं कल्पना नितान्तं कलात्मिका खलु। अत्र सजीवा प्रकृतिर्नटी कुसुमानां दीपकेन नीराजनां करोति।

कवयित्रीणां स्वतन्त्रा ग्रन्था नोपलभ्यन्ते, अतश्च तासां साहित्यिक-मूल्यनिर्धारणं दुष्करमेव। तासां काव्यविषयः प्राधान्येन शृङ्गार एव। सर्वा अपि कवयित्र्यः प्रेमवर्णनमेव प्राधान्येनाकुर्वन्। कलादृष्ट्या आसां कविता नोत्कृष्टकोटिका, मौलिकभावोद्भाविता वा तथापि क्वचित्कति-पयकवयित्रीणामाकर्षकं कवित्वमवश्यमनुत्तमं स्थानं भजते।

एवं संस्कृतकवयित्रीणां विषयेऽस्माकं परिचयोऽतीवापर्याप्तोऽस्ति। येन वयं तासां काव्यमूल्यं यथार्थतो निर्णेतुं न प्रभवामः।

## ४३. लोभः पापस्य कारणम्

विचित्रेऽस्मिन् संसारे यत्किञ्चित् दृश्यते तत्सर्वं महदाश्चर्यभूत-मस्ति। लोभोऽयम् एकोऽसाधारणः मानसिकभावोऽस्ति। यथा मनुष्यस्य करुणाशोक क्रोधमोहकामादयो मानसिकभावाः सन्ति। तथैव लोभोऽपि मानसिकभाव एवास्ति तथाऽन्येषांभावान् जनयिताऽस्ति। यत्र कुत्रचिद् दृष्टिं पातयामः तत्रैव लोभस्य असाधारिणीं, अनर्थकारिणीं शक्तिमव-लोकयामः। दुर्योधन एतावान् राजनीतिज्ञः वीरः गुणग्राही शासक आसीत् परं सः राज्यलोभान्नाशमेत्य लोके परां निन्दामवाप। मुञ्जोऽपि राज्य लोभात्स्वभ्रातृजं भोजराजं पुराहन्तुमादिशत्। पुराणेषु श्रूयते यदिन्द्रो देवराजः स्वपदरक्षायाः लोभादश्वमेधकर्तॄणां नृपाणामश्वान् हृत्वा अश्व-मेधयज्ञेषु विघ्नान् चकार। लोभोऽयमनेकविधोऽस्ति। कश्चित् पदलोभेन

ग्रसितः, कश्चिद् यशोलोभेन ग्रसितः, कश्चिदन्नधनलोभेन कश्चित् कान्तालोभेन कश्चिद् ऐश्वर्यादिलोभेन च ग्रसितः। परं यत्र यत्र लोभः तत्र तत्राऽवश्यं पापं भवतीति नात्र विषये संशयः कार्यः। पदयशःकान्तालोभेन पृथ्वीराजजयचन्द्रादयो राजानः परस्परं द्विषन्तः नाशमवापु र्भारतं च पराधीनतामनयन्।

अद्य तु पदलोभेन सर्वत्र विश्वेऽपि अनर्थमयं दूषितं वातावरणं दृश्यते। कुत्रचित् पदलोभेन योग्यजनसेवकानां हिंसा विधीयतेऽपमानं च क्रियते। अमेरिकायां पदलोभेन राजनीतिज्ञैः राष्ट्रपतीनाम् कनेडी महोदयानां हिंसाऽकारि। अन्यदेशैः किम्। स्वदेश एव तावत्पश्यामः यत् पदलोभेन सर्वत्र विषममतिभयजनकं वातावरणं दृश्यते। राजनीतेः दूषितवातावरणात योग्यशासकाः तिरस्क्रियन्ते, व्यापाद्यन्ते शासनाच्च पृथक् क्रियन्ते। विहारोत्तरमध्यान्ध्रोड़ीसादिप्रदेशेषु प्रायः प्रतिवर्षं राष्ट्रपतेः शासनं, शासकानां मन्त्रिमण्डले परिवर्तनं, अवधिसमाप्तेः पूर्वमेव निर्वाचनं, मतदानं च भवति। एतत्सर्वं पदलोभादेव भवति।

विधानसभादीनां निर्वाचन पुनर्मध्यावधिमतदानं तु तावद्दूरे तिष्ठतु। लोकसभाया अपि पदलोभेन मध्यावधिनिर्वाचनं मतदानं च भवति। शासकानां पदलोभं दर्शं दर्शं व्यापारिणः स्वेच्छया मूल्यवर्द्धनं कुर्वन्ति। प्रथमं तु वस्तुसंचयं कृत्वाऽभावं दर्शयन्ति। ततः प्रजासु हाहाकारे संजाते स्वेच्छया मूल्यं गृहीत्वा जनशोषणं, देशं दुर्बल कुर्वन्ति। अन्येषां देशानां समक्षं स्वदैन्यस्वरूपं प्रकटयन्ति। यद्यपि न कोऽपि हेतुः दीनतायाः विद्यते। परमेते व्यापारिणः शासकानां पदलोभमवलोक्य अनुचितलोभं कुर्वन्तः देशं गर्ते नयन्ति, मानवतामधिक्षिपन्ति च।

एतत्सर्वं जानन्तोऽपि शासकाः पदलोभेन ग्रहग्रस्ता इव, मदोन्मत्ता इव, अशक्ता इव, अकिञ्चना इव, बधिरा इव, मूका इव, लोभमोहकामक्रोधाभिभूता इव एते तथा व्यवहरन्ति, यथा न किञ्चित् जानन्ति।

धनलोभेन प्रत्यहं सर्वत्र अनेकविधानां, पापानामनर्थकरं नृत्यं भवति। धनलोभेन, कश्चिद् व्यापाद्यते, लुण्ठ्यते तिरस्क्रियते च। किमधिकं ब्रूमः

धनलोभेन, जनाः परेभ्यो धनं गृहीत्वा चिर्मरिका इवजनान् कर्तित्वा प्रक्षिपन्ति, स्त्रियः धनलोभेन स्वात्मानमपि विक्रीणन्ति । कतिपये मातृपितृभ्रात्रादयः स्वदुहितरं, भगिनीं च धनलोभेन विक्रीणन्ति ।

तत्र तत्र पापमेव निवसति । कान्तालोभेन तु के केऽनर्थाः सम्भवन्ति इति वक्तु न पार्यते । कान्तालोभेन देवा मनुष्याश्च प्रतिक्षणं बहु पापं कुर्वन्ति परस्परं विद्विषन्ति च । कान्तालोभमुद्दिश्य पृथ्वीराजजयचन्द्रयोः यद्विद्वेषमभूत् तत्कां न जानाति । ययोः विद्वेषेणैव भारतवर्षं पारतन्त्र्यमध्यगच्छत् । अद्यापि नगरेषु, ग्रामेषु, प्रदेशेषु, देशेषु, विदेशेषु च कान्तालोभेनानेकेऽनर्थाः सञ्जायन्ते कान्तालोभेन रावणस्य तथा नाशोऽभूद् यत्तस्मै कोऽपि जलतर्पणायाऽपि नावशिष्टः । हिंसायाः द्वावेव मुख्यौ हेतू स्तः । प्रथमस्तु भूमिलोभः द्वितीयस्तु कान्तालोभः । अनुदिनम् आभ्यां हेतुभ्यां परितः अनर्थाः हिंसादीनि पापानि संजायन्ते ।

भगवता श्रीकृष्णेनार्जुनायोपदिशता लोभ एव पापहेतुरित्यभिहितोऽस्ति यत् लोभात्संजायते मोहः मोहात्कामोऽभिजायते । कामात्संजायते क्रोधः । अतः आसक्तिं विहाय कार्यं कार्यम् ।

पञ्चतन्त्रे लिखितमस्ति यत्—

**अतिलोभो न कर्त्तव्यः लोभं नैव परित्यजेत् ।**
**अतिलोभाभिभूतस्य चक्रं भ्रमति मस्तके ॥**

अयमाशय :—चत्वारो ब्राह्मणकुमाराः धनार्जनाय सिद्धिवर्तिकाः नीत्वोत्तरां दिशां प्रस्थिताः । गच्छतां चतुर्णां तेषामेकस्य हस्तात् सिद्धिवर्तिका पतिता । तत्र तेन खनित्वा विपुलं ताम्रमवाप्तम् ततस्त्रयोऽग्रे प्रस्थिताः । पुनश्चैकस्य हस्तात् सिद्धिवर्तिका पतिता तेन च खनित्वा रजतमयीभूमिरवाप्ता । ततश्च द्वौवेव प्रस्थितौ तयोरेकस्य हस्तात् सिद्धिवर्तिका पतिता । तेन खनित्वा स्वर्णमयीं भूमिमधिगत्य चतुर्थः सहयोगी उक्तः यत् यथेच्छया स्वर्णं गृहाणात एवाऽऽवां गृहं प्रतिगच्छाव । तदाऽतिलोभाक्रान्तः सोऽग्रे प्रस्थितः न प्रत्यावर्तत । गच्छंश्च सः एकं पुरुषमद्राक्षीत् यस्य शिरसि भ्रमच्चक्रमपि ददर्श । तं चक्रभ्रमणकारणं

समयं चापृच्छत् । तदैव तच्छिरसस्तच्चक्रं समुत्प्लुत्याऽऽगन्तुकस्य शिरसि अस्थात् । येन सः रुधिरेणाऽप्लावितशिरोऽभवत् । तदा तमन्वेषमाणः तस्य सुवर्णसिद्धिनामा सहचरस्तत्र समायातः तमाह च यत् 'अतिलोभो न कर्त्तव्यः' ।

उपर्युक्तविवेचनेन एतद्वक्तुं शक्यते यत्-तत्र लोभस्तत्र तत्रावश्यं पापं भवतीति नात्र संशयोऽस्ति । अतः यदुच्यते यत् "लोभःपापस्य कारणमिति" सर्वथा सत्यमेवास्ति । अतः लोभो न विधेयः । निर्लोभः स्यात् । पापानामेकमात्रकारणं लोभ एव भवतीति ।

## ४४. सन्ध्यावर्णनम्

**खगा वासोपेताः सलिलमवगाढो मुनिजनः,**
**प्रदीप्तोऽग्निर्भाति प्रविचरति धूमो मुनिवनम् ।**
**परिभ्रष्टो दूराद् रविरपि च संक्षिप्तकिरणो,**
**रथं व्यावर्त्यासौ प्रविशति शनैरस्तशिखरम् ।।**

परिणते दिवसे पश्चिमा दिक् सूर्यरश्मिभिररुणीकृता । प्रदोषकाले सूर्य्यः पाताललोकं प्रतिगमनाय सन्नद्धो भवति । सान्ध्य ईषद्रक्तो दिनमणिस्तदानीं दिवसकुक्कुटस्य शिखावृन्दस्याकार इव चक्राकारः शोभते। अस्ताचलमन्दारस्य पुष्पगुच्छ इव तदानीं स प्रतिभाति । सिन्दूरराजिभिः रक्तीकृतस्यैरावतस्य कपोलस्य भ्रान्तिं स जनयति, आकाशलक्ष्म्याः कुसुमस्तबक इव स हृदयमावर्जयति, सन्ध्यायास्तिलकवच्च स चारु चकास्ति । विहाय भूतलमन्मुच्य कमलिनीवनानि वृक्षाग्रेषु, पर्वतशिखरेषु च सूर्यरश्मयो लम्बयन्ति । मन्दं मन्दं गगनं घनारुणं जायते । सकलवृक्षखण्डहरित्वमरुणात्वं च भजते । मनाक्वृक्षाग्रविलासिनो भानुकराः पर्वतशृङ्गेषु स्फुरन्तोऽभिदृश्यन्ते । अधुना तु प्रतीचिविलासिन्याः कनकदर्पण इव दिनपतिः राजते ।

नीडाकाङ्क्षिणो विहगामिथः कलहेन विकला मुखराश्च गोचरीभवन्ति । काकाः स्वावासस्थानविषये समुत्सुक नीडानि प्रति उड्डीयन्ते ।

क्वचिदरण्यस्थलीषु रोमन्थमन्थरमृगकुटुम्बा अध्यासीना गोचरीभवन्ति, क्वचिद् ग्रामतरुसमूहेषु निद्राधीनाः काकुला नीडेषु प्रविशन्ति, क्वचिच्चिरन्तनवृक्षाणां कोटरेषु स्थायिन उलूकसमूहा बहिर्गन्तुमिच्छन्ति, क्वचिन्मयूराः स्ववासदण्डेषु राजमानाः केकां कुर्वन्ति, क्वचिच्च भ्रमराः सन्ध्याप्रारम्भे एव सङ्कुचितानां कमलानां मध्यभागेषु निरुद्धा गुञ्जन्ति।

अनेनैव पथा भगवता सूर्येण गन्तव्यमिति वरुणः सत्काराय रक्तवर्णानां मेघानां पादपटास्तरणं करोति। साम्प्रतं सन्ध्या पश्चिमसागरस्य प्रवालवल्लिरिव, आकाशसरोवरस्य रक्तकमलिनीव, कामरथस्य सुवर्णमयध्वज इव, गगनहर्म्यतलस्य रागारुणपताका इव प्रत्यक्षीभवति। सन्ध्याया रागारुणतायाः कीदृङ् मनोहारि वर्णनमधस्तने पद्येऽस्ति—

**कालः किरातः स्फुटपद्मकस्य वध व्यधाद्यस्य दिनद्विपस्य।**
**तस्यैव सन्ध्य रुचिरास्रधारा ताराश्च कुम्भस्थलमौक्तिकानि॥**

अन्या मौलिका सूक्तिरपि द्रष्टव्याऽऽस्ते—

**आदाय दण्डं सकलासु दिक्षु योऽयं परिभ्राम्यति भानुभिक्षुः।**
**अब्धौ निमज्जन्निव तापसोऽयं सन्ध्याभ्रकाषायमधत्त सायम्॥**

सान्ध्यस्य रक्ताकाशस्य विलक्षणकारणस्यापि केनचित्कविनाऽनुसन्धानं कृतम्। एका चमत्कारिणी सूक्तिरप्यत्रोदाह्रियते—

**अस्ताद्रिचूडालयपञ्जरालिच्छेकस्य किं कुक्कुटपेटकस्य।**
**यामान्तकजोल्लसितैः शिखौघैर्दिग् वारुणी द्रागरुणीकृतेयम्॥**

निवासगृहेभ्योऽनवरतं दह्यमानानां कालागुरूणां सुगन्धयः प्रवहन्ति। वृद्धा बालस्वापगीतैः सार्धं बालकान् स्वापयन्ति। सन्ध्यावन्दनायोपविष्टाः कर्मनिष्ठा ब्राह्मणा ध्याननिरताः सर्वत्र लक्ष्यन्ते। स्ववत्सान् द्रष्टुकामाः पयस्विन्यः स्वगृहं प्रति त्वरमाणा दृश्यन्ते। क्षेत्रेषु क्रीडन्तो बालका गृहगमनत्वराः क्रीडासम्भारान् एकत्रीकुर्वन्ति। गोदोहने प्रवृत्ता गृहिण्योऽपूर्वमुत्साहं भजन्ते। सन्ध्यासमये नगराणां शोभाऽप्रतिमा खलु। सर्वत्रैव कृत्रिमता राजते। विद्युच्छटा अतिशयतेजसा दृष्टीः सन्तापयन्ति। पुरुषा महिला बाला युवकाश्च सुवाससः प्रसन्नवदनाश्च भूत्वा नगराणां शोभां द्विगुणीकुर्वन्ति।

क्रमेण चान्धकारो वनेषु ग्रामेषु च पदं निदधाति। तमसाच्छन्नतया भूमण्डलम् संकुचितकमलमिव लक्ष्यते। दिशः संकुचिता जायन्ते। अन्धकारेण बाधिता भ्रमराः कमलवनेषु इतस्ततः पतन्ति। सूर्यवियोगेन सन्तप्ताः कमलिन्यो विकलक्रौञ्चीजितच्छलेन विलपन्ति। गगने दृश्यमानास्तारका अप्रतिमां शोभामावहन्ति। गगनमहासरसि कुमुदवृन्दानां भ्रान्ति ते जनयन्ति। तारका नयनजलबिन्दुभिरस्तंगतस्य दिवाकरप्रियस्य शोकाद् रुदन्ति। सुप्तप्रबुद्धाः केसरिणः सिंहनादेन वनं कम्पयन्ति। संत्रस्ताः श्वापदा इतस्ततो धावन्ति।

अथ क्षणेन रजनीराजकन्याकन्दुक इव कामदेवकनकदर्पण इव उदयाचल बालमन्दारपुष्पस्तबक इव रजनीपतिरन्तरिक्षे उदेति। तदानीं चन्द्रगतो रागो क्षीणतां भजते। अनन्तरं क्षीणरागो भगवान् विधुरुद्गच्छति।

विगतायां च सन्ध्यायां सर्वत्र नीरवताया आधिपत्यं भवति। या सन्ध्या तपोवने योगनिद्रायाः प्रतीकम्, सा एव नगरे ललितकलायाः निदानम्। यतो नगरेषु विद्युच्छटानां प्रकाशे वाद्यसंगीतादिभिः सर्वं वातावरणं कोलाहलपूर्णं भवति। विचित्रा खलु संसारस्य गतिः।

## ४५. चन्द्रवर्णनम्

अस्तंगते दिवाकरे निशायां सर्वत्र तिमिरमुज्जृम्भते। रजन्या अभिसारिकायानीलवसनमिवतदानीं शोभतेऽन्धकारः। चक्षुषः पुरस्तात् स्थितानपि पदार्थानपह्नुते सः। तमसाच्छन्नतया स्वल्पमिव भूमण्डलं न लक्ष्यते। निमीलन्नीलकमलव्याजेनागतं निशापतिं नमदिव तिमिरं संलक्ष्यते। भौमादिनक्षत्रसमूहा गगनेऽक्षिनिष्पन्दनं कुर्वन्तोऽपूर्वां शोभामावहन्ति। गगनमहासरसि कुमुदवृन्दानां भ्रान्तिं ते जनयन्ति। तारकानयनजलबिन्दुभिरस्तंगतस्य दिवाकरदयितस्य शोकाद् दिशा रुदन्ति। विरहतापेन दीर्घं निःस्वसन् आलिङ्गनचुम्बनपटुचक्रवाकमिथुनमतीव दूयते। विरहातुरो हि विलपन् चक्रवाकमिथुनः कालपाशेन विघटते। कुमुदिन्याः

पार्श्वे सञ्चरन्ती भ्रमरमाला उदीयमानस्य चन्द्रप्रियतमस्य दूतीव संलक्ष्यते ।

अनन्तरं भगवान्निशाकरोऽन्धकारं प्रक्षालयन्निवोदेति । आकाश-गङ्गायाः श्वेतकमलमिव, अम्बरमहाप्रासादस्य श्वेतवर्णकपोत इव, आकाशस्य कर्णधार इव विधुस्तदानीं राजते यश्च लोकलोचनभ्रमराणां श्वेतकमलमिव, रजनीव्रजाङ्गनोद्धृतो नवनीतपिण्ड इव, उदयगिरिनाग-राजस्य शिरःस्थितरत्नमिव सलक्ष्यते ।

अयञ्च चन्द्रोदयः कस्य हृदयं नावर्जयति । चन्द्रमसश्चन्द्रिकामव-लोक्य हृतसर्वस्वाः कविवराः संगीतस्य मधुरं तानं, समारंभन्ते । तेषां हृदयस्था भावा स्वतः कवितारूपेण प्रस्फुटन्ति । संयोगे वियोगे वा प्रण-यिजनानामयमिन्दुरेवाश्वासकः । चन्द्रमुदीयमानमलोक्य नेत्राणि विच-लन्ति इतस्ततः । वियोगिनी कुमुदिनी दयितं सुधाशुं दृष्ट्वा उल्लसति । चन्द्रोदयारम्भेऽम्बुराशिरपि किञ्चित्परिलुप्तधैर्यो भवति ।

द्वितीयायां वक्रमिन्दुमवलोक्य नितरां तुष्यन्ति जनाः । धर्मनिष्ठाः श्रद्धया प्रणमन्ति । ललनाः शिशूनङ्के धृत्वा तान् चन्द्रमसं दर्शयन्ति । तमोनुदोऽयं शुभ्रांशुः कस्य हृदयं नाह्लादयति । सुन्दरी निशा शरत्काले मेघावगुण्ठनमपसार्य मुखचन्द्रस्य चन्द्रिकां सर्वत्र विकिरति ।

संस्कृतवाङ्मये प्रकृतिचित्रणं द्विविधं प्रत्यक्षीभवति । अनावृतवर्णन-मलंकृतवर्णनं च । आलम्बनत्वेन प्रकृतिचित्रणमनावृतवर्णनम् । मानवीय-करणत्वेन प्रकृतिचित्रणमलंकृतवर्णनम् ।

प्राकृतिकपदार्थेषु मानवीयभावानामभिव्यक्तिः मानवीयकरणं खलु । सजीवा प्रकृतिरत्र नानाव्यापारान् सम्पादयति एकमुदाहरणं प्रस्तूयते—

**अंगुलीभिरिव केशसंचयं संनिगृह्य तिमिरं मरीचिभिः ।**
**कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥**

यत्र प्रकृत्या नैसर्गिकी माधुरी कविहृदयमाकर्षति सिञ्चति च स्व-कीयेनानन्देन तत्र आलम्बनत्वेन वर्णनमास्ते । अस्यैकमुदाहरणं पर्याप्स्यति—

**उदयति हि शशांकः कामिनीगण्डपाण्डुर्ग्रहगणपरिवारो राजमार्गप्रदीपः ।
तिमिरनिकरमध्ये रश्मयो यस्य गौरा, स्नुतजल इव पंके क्षीरधाराः पतन्ति ।**

शशिना च निशा शोभते निशया च शशी । अनेन गगनस्य शोभा शतगुणं वर्धते । अस्य ज्योत्स्नायां तु चित्तमधिकं रमते । इमं हि ओषधीशं साक्षात्कृत्य लताः तृणानि, वनस्पतयश्चानन्दविह्वला जायन्ते । जलाशयेषु अस्य प्रतिबिम्बं पवनेनोदितैस्तरङ्गैः कम्पमानमधिक मनो हरति । किम्बहुना सति चन्द्रोदये चतुर्दिक् सुषमा वर्षति । प्रकृतिर्नटी अभिसारिकावत्प्रियतमं मार्गमाणा न जाने कुत्र गच्छति । पार्वत्यप्रदेशे राकायां भ्रमणं सुतरां मनोहारि खलु । तत्रोज्ज्वलवेषधारिणी रजनी दयितमन्वेषमाणा विलसति । पूर्णिमायां नौकाविहारोऽप्यनिर्वचनीयनानन्दं प्रयच्छति । संस्कृतसाहित्ये सुधांशुमाश्रित्य कविभिः प्रचुराः कल्पनाः कृताः । उपमानत्वेनास्य प्रचुरा प्रयोगाः संस्कृतसाहित्ये उपलभ्यन्ते येऽस्योत्कर्षं सकेतयन्ति । महाकाव्येषु क्वचिदस्यापकर्षत्वमपि गोचरी भवति । एकमुदाहरणं पर्याप्स्यति—

**सरोरुहं तस्य दृशैव निर्जितं,
जिताः स्मितेनैव विधोरपि श्रियः ।
कुतः परं भव्यमहो महीयसी,
तदाननस्योपमितौ दरिद्रता ॥**

परमपकर्षत्वेऽपि चन्द्रमसश्चारुत्वमव्याहतमेव । यत आननस्योपमितौ विधोः दरिद्रता सर्वथा तस्य निषेधे एव सम्भवति ।

तथापि सन्ति संसारे चौरा जारा येभ्यः सुधांशुरपि न रोचते । नह्यत्र चन्द्रस्य मनागपि दोषः । स तु सर्वान् सममाह्लादयति । ●

## ४६. आचारः परमो धर्मः

असारेऽस्मिन् संसारे केवलमेकमेव वस्तु सारमयमस्ति तदेव आचारः सदाचारः शिष्टाचारश्च कथ्यते । यद्यपि धर्ममुद्दिश्य विदुषां महान् विवादोऽस्ति परमाचारस्य गौरवं सर्वेऽपि स्वीकुर्वन्ति मुक्तकण्ठेन प्रशं-

सन्ति उपदिशन्ति च । सताम् आचार एव सदाचारः कथ्यते । सदाचारस्यापरं नाम वृत्तं च शीलमस्ति । शीलस्य महत्वं पुराणेषु बहुधा व्यावर्णितमस्ति । तथा चोक्तमस्ति महाभारते—

"शीलेन हि त्रयो लाकाः जेतुं शक्या न संशय"

अर्थात् सदाचारेण त्रयो लोकाः वशीकर्तुं शक्यन्ते प्रह्लादः शीलेनैव त्रीनपि लोकानजयत् । ध्रुवस्तु शीलेन ध्रुवं स्थानम् प्राप्यामरत्वं यशः च लेभे । श्री रामचन्द्रेण सदाचारस्यैव बलेन पदातिरेव वानराणां साहाय्येन इन्द्रविजयिनं लोकविद्रावणं रावणं विजित्य मर्यादापालकत्वेनालौकिक यशोर्जितमिति सर्वैरपि विज्ञायत एव ।

राणाप्रतापशिववीरादयः सदाचारस्यैव बलेन क्रूरान्विजित्य सदाचारमस्थापयन् । तिलकगान्धिसुभाषजवाहरलालबहादुरादयः महता परिश्रमेण शीलेनौदार्येण च स्वदेशं स्वतन्त्रमकारयन् । सदाचरणस्य यन् महन्महत्वमस्ति तन्न केनापि वर्णयितुं शक्यतेऽतः महता परिश्रमेण सदाचारः पालनीयः संरक्षणीयश्च । तथा च मनुराह—

वृत्त यत्नेन संरक्षेद्वित्तमायाति याति च ।
अक्षीणोवित्ततः क्षीणो वृत्ततस्तु हतो हतः ।।

अपि च—

आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः ।
आचाराद्धनमक्षय्यमाचारो हन्त्यलक्षणम् ।।

अर्थात् सदाचरणेन पुरुषः दीर्घायुः प्राप्नोति, इष्टसन्ततिं चाप्नोति । अनश्वरं धनं च लभते । सदाचारेणैव सर्वाण्यपि अलक्षणानि नश्यन्ति । सदाचारमवमत्य न कोऽपि किमपि सुखं शान्तिं च लभते । यतः रावण कंसजरासंधदुर्योधनादयः बलवन्तो नृपाः सकलैश्वर्ययुक्ता अपि सदाचार विहीनाः सन्तः तथा नाशमध्यगच्छन् यथा न कोऽपि तेषां नामानि अपि सादरेण स्मरति । ये सदाचारिणोऽभवन्तेषां नामानि स्मर्यन्ते, पूज्यन्ते सत्क्रियन्ते च ।

मदनमोहनमालवीयस्तु सदाचरणेनैव लब्धप्रतिष्ठस्य हिन्दूविश्व विद्यालयस्य स्थापनां विधायालौकिकं विद्यादानफलं प्राप्य भौतिकशरी

विहाय यशः शरीरेणाऽमरतां ययौ । हिन्दूविश्वविद्यालये देशविदेशेभ्यः समेत्य सहस्र छात्राः प्रतिवर्षं विद्यां गृह्णन्ति स्वजीवनं व सफलयन्ति । सदाचारस्य प्रभावेण मदनमोहनमालवीयः यत्र यत्र जगाम तत्र तत्र महद्धनं महान्तंसमादरं च प्राप ।

महर्षिदयानन्दविनोबाचार्यादयो महात्मानः सदाचारस्य बलेन महतीं ख्यातिं प्राप्य लोकैः सत्क्रियन्ते पूज्यन्ते च । विनोबाचार्यस्तु स्वसदाचारस्य बलेनैव क्रूराणां दस्यूनां परधनलुण्ठकानामाततायिनामपि हृदयपरिवर्तनमकरोत् येन दस्यवोऽपि दस्युकर्म विहाय स्वात्मसमर्पणमकुर्वन् कुर्वन्ति च । अतः सर्वेषामेव परमं कर्त्तव्यमस्ति यत् सदाचारस्य रक्षा महता यत्नेन करणीया । सदाचरणस्यैव रक्षणेन आचरणेन च देशस्य वास्तविकी प्रगतिः सम्भाव्यते । यस्य देशस्य कोऽपि आचारः नास्ति तस्य विनाशस्तु निश्चतमेवास्ति यथा पाकिस्तानस्य सैनिकानां न कोऽपि आचारः आसीत् येन पूर्वीयपाकिस्तानस्य एकं महत्वपूर्णभागं स्वाधिकारात् निष्क्रमन्तं नावरोद्धुं शेकुः । सदाचारिणः "मुजीबस्य" संरक्षणेन तन्निर्दिशेन च "बंगलादेशः" एको स्वतन्त्रदेशोऽभूत् । बंगलादेशवासिनां स्वतन्त्रभावनां स्वदेशनिष्ठां शौर्यं च दर्शं दर्शं सर्वेऽपि देशविदेशीयाः तान् प्रशंसन्ति सादरं नमन्ति च । तेषामपूर्वोत्साहसस्य गाथां च गायन्ति । पाकिस्तानस्य क्रूराः हतकाः वृषभाः सदाचारणभ्रष्टाः कामान्धा सैनिकाः भारतीयस्य सदाचारिणः सैन्यस्य समक्षं शस्त्राणि परित्यज्यभूमौ नतमस्तकाः भूत्वाऽऽत्मसमर्पणमकुर्वन् । श्वान इव ते बन्धनमधिगत्य दस्यवइव भारते गर्हितम् जीवनम् अयापयन् ।

अपि च यद्भौतिकं चाकचियं सर्वत्र दृश्यते तत्सर्वं विनाशि एवास्ति केवलमाचार एवाऽविनाशी विद्यतेऽतः सर्वमपि प्रपञ्चं विहाय सदाचारस्य शरणं व्रजेम । स एवास्मान् रक्षयिष्यति, कल्याणं, सुखं शान्ति च दातुं प्रभवति । केवलं संसारे सदाचार एव श्रेयान् पन्थाऽस्ति ।

## ४७. श्मशानवर्णनम्

अवलोक्यतामिदं हि श्मशानम् । अस्याभिधानश्रवणमात्रेणैव भयकम्पो जायते, शरीरञ्च साध्वसोपहतं भवति । साक्षात्कृते तु मुखं परिशुष्यति, प्राणाश्च कण्ठे आगच्छन्ति । श्मशानमवलोक्य कस्य हृदये वैराग्यं नोत्पद्यते ? यौवनं, धनसम्पत्तिः, प्रभुत्वञ्चाशाश्वतानि प्रतीयन्ते, बुद्बुद इव मानवस्य स्थितिः केन नानुभूयते ? 'ब्रह्म सत्यं जगन्मिथ्या' इति तथ्यस्नानुभूतिरत्रैव पुराऽभवदग्रे भविष्यति च सहृदयनाम् ।

मृगतृष्णिकया भ्रान्त आशादोलाधिरूढो मनुजस्तृप्तिमनुभवति संसारे । परमन्ते ईश्वरविमुखो निराशागर्त्ते एव स पतति । अस्यैव मार्मिकसत्यस्योद्घाटनं केनचित्कविनाऽधस्तने पद्ये कृतम् —

**विशालं शाल्मल्या नयनसुभगं वीक्ष्य कुसुमं,**
**शुकस्यासीद् बुद्धिः फलमपि भवेदस्य सदृशम् ।**
**इति ध्यात्वोपास्तं फलमपि च दैवात्परिगतं,**
**विपाके तूलोऽन्तः सपदि मरुता सोऽप्यपहृतः ।।**

श्मशानावलोकनेन हृदयेऽपि महान्प्रभावो जायते । केचन तत्रैव विरक्ताः सन्तः काषायधारिणो जायन्ते । सहृदयस्तु श्मशानदर्शनेन कायस्यानित्यतां भोगानाञ्चासारतामवधार्य संसारे जलकमलवन्निवसन्ति। निश्चयन्ति च यदसारे खलु संसारे परोपकार एव सारः । भर्तृहरिणा सुष्ठु उक्तम्—

**तुरङ्गवेश्मसुताः सतामभिमताः सख्यातिगाः सम्पदः,**
**कल्याणी दयिता वयश्च नवमित्यज्ञानमूढो जनः ।**
**मत्वा विश्वमनश्वरं विधिशतः संसारकारागृहे,**
**संदृश्य क्षणभंगुरं तदखिलं धन्यस्तु संन्यस्यति ।।**

नरमांसग्रासेच्छया एकत्रीभूतानां कंकाना कुलैर्व्याप्तम्, अर्धदग्धे चितामण्डले सिमसिम इति शब्दं कुर्वत्या मेदसा भीषणं, रक्तसमूहपतनेन झंझमिति शब्दयुतं श्मशानं वीभत्सं घृणितञ्च गोचरीभवति । क्वचिदग्नौ दह्यमानस्य मनुष्यशिरसोऽस्थ्नष्टंकारेण तुमुलं, कचिन्मक्षिकाणा-

मुड्डयनरूपेण क्रीडासमूहेन भरितं, क्वचिच्च कुक्कुरैः श्रृगालैश्च सकुलं श्मशानं मानवस्य निराश्रयत्वं प्रति संकेतयति ।

श्मशानस्य प्रत्येकं स्फुलिंगेषु अशेषाः काला निहताः सन्ति । अनेकेषां कीर्त्तिस्पृहा, ऐश्वर्याकांक्षा, उत्कृष्टपदवाञ्छा, राज्यलोभश्चात्र भस्मलिप्ता शेरते । स्वहृदयप्रियान् बान्धवानप्यत्र नृशंसतया चितासु क्षिपन्ति मानवाः । अत्राश्रूणि विमुञ्चन्ति क्रन्दनञ्च कुर्वन्ति ।

चतुर्दिक् हा पुत्र, हा मित्र, हा बन्धो, हा भ्रातः, हा प्राणनाथ, हा मातुल, भृशमववदना मानवा हा जनक, इति करुणं विलपन्तः श्रूयन्ते । किम्बहुना दृश्यमति श्मशानस्य वीभत्समुद्वेगकरञ्च ।

रामकृष्णगौतमप्रभृतयोऽप्यस्याग्निशिखाभिर्नातमनस्त्रातुं प्रभवन्ति स्म । समतायाः प्रतीकं श्मशानं खलु । धनिकदरिद्रयोः, सुरूपकुरूपयोः बलिष्ठनिर्बलयोः प्राज्ञमूर्खयोश्चात्र भेदस्तिरोहित एव । सर्वान्प्रति श्मशानं निष्ठुरमेव । इदमश्रुभिः क्रीडति । रोदनमेवास्यावलम्बनम् । कीदृशं विलक्षणमस्य जीवनं यत्स्मितमत्र कदापि न प्रत्यक्षीभवति । वियोगस्यैवेदं प्रतीकम् । मिलनसुखवञ्चितमिदं हतभाग्यं कस्यापि चित्तं नावर्जयति । एकपार्श्वे श्रृगालाः फूत्कारं कुर्वन्ति, अन्यपार्श्वे मानवाः क्रदन्ति । धू धू इयि शब्दान् चिताः कुर्वन्ति, शुष्कानि च काष्ठानि चीत्काराणि कुर्वन्ति । परं वधिरः श्मशानाग्निरुन्मुख इव प्रज्वलति । वंशं हस्ते धृत्वा यो मानवकपालस्य भेदनं करोति किं श्मशानस्य स स्वामी । कीदृशो भीषणाऽस्याकृतिः ।

अग्निपर्वता हततापा अभवन्, वाडवाग्निः समुद्रेऽशुष्यत्, शङ्करस्य तृतीयनेत्राग्निः क्षणेन शान्तः परं श्मशानाग्निरनादिकालाज्ज्वलति । श्मशानं हि मृतकस्य दोषानाच्छादयति गुणान च प्रकटयति । कोमलभावनां द्विगुणीकरोति, हृदयकालुष्यञ्च प्रक्षालयति । इत्थं श्मशानस्याप्युपादेयता स्वतः सिद्धा ।

## ४८. लालबहादुरशास्त्री

विचित्रेऽस्मिन् संसारे यत्किञ्चदृदृश्यते तत्सर्वमप्याश्चर्यकरं प्रतिभाति। संसारे द्विप्रकारकाः मनुष्याः भवन्ति सत्प्रकृतयोऽसत्प्रकृतयश्च। यदाऽसत्प्रकृतीनां हिंसकानां क्रूराणामाततायिनां दुराचाराणां च बाहुल्यं भवति तदा कोऽपि न कोऽपि सन्मार्गोपदेष्टा जनरक्षकः क्रूरादीनां हिंसकानां निहन्ताऽऽपदां ग हन्ता जन्म गृह्णाति। यदा रावणस्य वंशीयैः धराऽतीव त्रस्ता व्यथिता कम्पिता चाभवत् तदा लोकसंरक्षकः मर्यादा-पुरुषोत्तमश्श्रीरामः दशरथस्य पुत्ररूपेणायोध्यामवातरत्। खरदूषण-मेघनाद-कुम्भकर्णादीन् राक्षसान् निहत्य लोके शान्तिं, सुखं, समृद्धिं सन्तोषं च प्रजासु अस्थापयत्। अद्यापि जनाः रामराज्यस्य न्यायं, सुख-शान्ती च मुक्तकण्ठेन वर्णयन्तः सन्तोषमनु भवन्ति।

कंस-जरासन्ध-शिशुपाल-दुर्योधनादीनां व्यवहारेण संत्रस्तां, दीनां, संतप्यमानां वसुन्धरामवलोक्य भगवाञ्छ्रीकृष्णोऽवतीर्य केशीबकासुरपूतना-कंसादीन् आततायिनः जघान। वसुधायां सुख-शान्ती अस्थापयत्। अपरञ्च गीतायामुक्तमस्ति यत्—

> **यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।**
> **अभ्युत्थानं हि धर्मस्य तदात्मानं सृजाम्यहम्॥**

अतः एतत् सिद्धयति यत् समये समये महापुरुषाः समवतीर्य वसुधायाः भारमपहृत्य सुखशान्ती च स्थापयन्ति। एतादृशो रामकृष्ण-बुद्ध-शिववीर-राणाप्रतापाशोकादय इव भुवोभारमपाकर्तुं लालबहादुराख्यो महापुरुषो भारत भुवमलञ्चकार। श्रीलालबहादुरस्य जन्म मुगलसराय नामकस्थाने अक्टूबर मासस्य द्वितारिकायां १६०४ ईश्वीयेऽभवत्। अस्य पितुर्नाम शारदाप्रसाद इति—आसीत्। स बाल्यकाल एव पुत्रं विहाय परलोकवासमकरोत्। पितुरभावादयं महता कष्टेन समयमयापयत्। पदातिरेवाध्येतुमगच्छत्। धनाभावात् प्रतिष्ठित विद्यालये शिक्षां नागृहीत्। काशीविद्यापीठे स्थानमगृहीत्।

स्वतन्त्रतासंग्रामे महता परिश्रमेण सक्रियसहयोगमकरोत् । कतिवारमयं कारागारं प्राप्य वह्वीः यातना असहत । स्वतन्त्रताप्राप्तौ सर्वप्रथममुत्तर-प्रदेशस्य मन्त्रिमण्डले गृहमंत्रिरूपेण जनसेवामकरोत् । केन्द्रेऽपि वाणिज्योद्योगमन्त्रिपदं तथा धूम्रयान-मन्त्रिपदं च स्वीकृत्य कामराजस्य कुटिलयोजनानुसारेणायं मन्त्रिपदात्त्यागपत्रमदात् । पुनः जवाहरलालेनास्मै अविभाग-मन्त्रिपदं दत्तं, ततः नेहरोः परलोकगमनान्तरं लालबहादुरः भारतस्य प्रधानमन्त्रिपदमलञ्चकार ।

अयं शरीरेण लघुकायोऽपि सन् अतुलबलपौरुषयुक्तः, शान्तोऽपि शत्रूणां विनाशाय परशुरामसदृशः, कोमलहृदयोऽपि आततायिनां सदाचरणशिक्षायै शल्यचिकित्सक इव कठोरः, भव्याकृतिरपि परेषां भयजनकः, शिष्टोऽपि स्वदेशावमानिनां कपोले चपेटाताडयिता, सांसारिकविविध-विषयेष्वनुरक्तोऽपि जनक इव विरक्तः, लघुशरीरोऽपि भीम इवाप्रतिहतशक्तिः, विनीतवेषोऽपि शत्रूणां हृदयविदारकः आसीत् । यस्य लघुकायं दर्शं दर्शं पाकशासकाः पवित्रां भारतभुवं रक्तपातेन दूषयितुं सहसा भारतमाक्रमन् । पाकशासकानामेतादृशीं दुश्चेष्टां दुर्भावनां चावगत्य लालबहादुरः भारतस्य प्रधानमन्त्रिपदमधितिष्ठन् स्वसैनिकानादिश्य पाकसैनिकान् स्वभूमेः पृथक् कृत्वा तेषामपि वह्वीं भूमिं हस्तगतामकरोत् । तदा पराभूताः पाकशासकाः दैन्यमापन्नाः श्वान इव लाङ्गूलं चालयन्तश्चाटुकारितां कुर्वाणाः रूसदेशस्य शरणमवापुः । भारतेन सह सन्धिप्रस्तावमकुर्वन् ।

श्रीशास्त्रिमहोदयः पाकस्य प्रधानमन्त्रिणोऽयूबस्य प्रार्थनया द्वयोर्देशयोः शान्तिस्थापनभावनया ताशकन्दमयासीत् । तत्र द्वयोः प्रधानमन्त्रिणोर्मध्ये मतैक्येन सन्धिरभूत् । सन्धिप्रस्तावपत्रे हस्ताक्षरं विधाय शास्त्रिमहोदयः सुखेन निद्रां न लेभे । तस्य मनसि भयमासीत् न जाने भारतीय प्रजा मत्कृतां सन्धिं स्वीकरिष्यति न वेति चिन्तया तस्य प्राणाः परलोकं प्रस्थिताः । नश्वरमिदं शरीरं जडतामवाप । यदा भारतीयाः हृदयदारिकां करुणकथाम् शृण्वन् तदा सर्वेऽवसन्ना आश्चर्येण मौना एव चुक्रुशुः स्वान् हतभाग्यान् मन्यमानाः किंकर्त्तव्यविमूढा अभवन् ।

वस्तुतः श्री लालबहादुरशास्त्री आदर्शजनसेवकः क्रियावान् सक्रियः नेता परमोत्साहसम्पन्नः स्वार्थरहितः, निस्पृहः, शूरः, उदारमना परमकारुणिकः, भारतभूमेरादर्शपुत्रः भारतस्यात्मा, स्वतन्त्रतासेनानीः, सरलतायाः, सज्जनतायाः सत्यतायाश्च साक्षादवतारः मानवतायः पूजकः, निःस्वार्थदेशभक्तः सेवकश्चादर्शनेता, गान्धिनः परमप्रियशिष्यः श्री लालबहादुरशास्त्री स्वतन्त्रभारतस्य द्वितीयः प्रधानमन्त्री आसीत्। येन सः देशः विश्वगौरवेण सत्क्रियते, पूज्यतेच, सर्वेषां मूर्ध्नि विराजते। यशसा, वैभवेन च ख्यातिं प्राप्य परं मोदमादधाति। इतिसर्वं श्री लालबहादुरशास्त्रिणः प्रधानमन्त्रिपदमलङ्कुर्वाणस्यैव फलस्ति। ०

## ४६. इन्दिरागान्धी

परममहनीयेऽस्मिन् संसारे पुरा अनेकाः आदर्श-महिलाः समभवन् याः भारतस्य गौरवभूता आसन् तासामद्यापि कासकुसुमानीव शुभ्राणि यशांसि शोभन्ते। अरुन्धतीगायत्र्यात्रेयीसीतासावित्रीलक्ष्मीबाई-अहल्यादयः स्वजन्मना भारतस्य गौरवं प्रतिष्ठां ख्यातिं च अवर्द्धयन्। यथा समये समये देशोद्धाराय महापुरुषाः समुद्भवन्ति तथैव शक्तिरूपाः सम्माननीयाः महिलादेव्यः भारतभूमिमलङ्कुर्वन्ति। अपरं च देशस्य उन्नत्यै, सम्पन्नतायै, गौरववृद्ध्यर्थं च यतन्ते सक्रियसहयोगं च ददति।

एतादृशीषु महाशक्तिरूपासु स्त्रीषु सम्प्रत्यस्माकं प्रधानमन्त्रिपदमधितिष्ठन्ती भूतपूर्वप्रधानमन्त्रिणः जवाहरलालनेहरोः सुपुत्री, माननीयस्य श्री मोतीलालस्य पौत्री देवी "इन्दिरा" भारतस्य गौरवभूताऽस्मान् शास्ति रक्षति, पालयति, कुमार्गान्निवारयति च। इयं महाशक्तिरूपा, दुर्गारूपा चेन्दिरा चाणक्यबुद्धिरिव बुद्धिमती, दुर्गेव शत्रुनिहन्त्री, शिवेव शान्तिदायिनी, चन्द्रचन्द्रिकेव लोकानन्ददायिनी, धरेव क्षमाकर्त्री, गंगाधारेवाप्रतिहतशक्तिः, ध्रुवमतिरिव ध्रुवकर्त्री, अबलाऽपि सबला, कोमलाऽपि शत्रुभयजनयित्री, भारतस्य प्रधानमन्त्रित्वपदमलङ्कुर्वाणा विश्वप्रसिद्धाऽस्ति।

इन्दिराया जन्म प्रयागे नवम्बरमासस्य नवमतारिकायां १६१७ ईश्वीयेऽभवत् । अस्या जनन्याः जनकस्य च नाम कमलानेहरू तथा जवाहरलालनेहरू इति स्तः । शिक्षाग्रहणकालादेव देवीन्दिरा पित्रा सार्धं देशस्य वास्तविकीं दशां विज्ञाय देशभक्तौ दृढमनुरक्ताऽभवत् । यद्यपि शिक्षणसमये पितुः भूयान् कालः कारागारे एव व्यतीतोऽभवत् । तथापि सः पत्रेणैवेन्दिरां देशभक्तेः शिक्षामुपादिशत् । सम्प्रति तत्पत्राणि पुस्तक-रूपेण प्रकाशितानि वर्तन्ते । पितुः प्रभावः इन्दिरायामुपरि पूर्णरूपेणाऽपतत् । देशविदेषु सा पित्रा सार्धमेवाऽभ्रमत् येन राजनीतेः पूर्णं परिचयं प्राप्य राजनीतौ दक्षा संजाता । फीरोजगान्धिना सहास्याः विवाहोऽभवत् । कतिवारं फरोजगान्धिना सह स्वदेशं स्वतन्त्रं कारयितुं कारागारमपि अगच्छत् । १८५५ ईश्वीये इयं कांग्रेसस्याऽध्यक्षपदमलङ्करोत् । प्रधान-मन्त्रिणः जवाहरलालनेहरोः मरणानन्तरं मन्त्रिमण्डले सम्मिलिताऽभवत् ततः लालबहादुरशास्त्रिणि दिवंगते इयं प्रधानमन्त्रिपदमलङ्कृतवती ।

अस्या औदार्यं, शौर्यं, क्षमामवारणीयं क्रोधं शासननैपुण्यं च श्रावं श्रावं बंगलादेशनिवासिनः, पाकशासकानामत्याचारमसहमानाः पाक-सैनिकैः सह विद्रोहमकुर्वन् स्वस्वतन्त्रतायै आन्दोलनमकुर्वन् । यद्यपि निर्वाचने बंगलादेशस्य प्रियनेता "मुजीबः" बहुमतेन निर्वाचितोऽभवत्त-थापि पाकशासकैः शासनं तस्मै न समर्पितम् अपितु बंगलादेशे बालहत्या भ्रूणहत्या जनहत्या छात्राध्यापकबुद्धिमतां च हत्या कुमारीणमपि बलात्कौमार्यापहरणं सामूहिकरूपेण समारब्धं यच्छ्रुत्वा प्रस्तरस्वभावो अपि जनोऽश्रूणि पातयति पाकसैनिकान् निन्दति च । बंगलादेशस्य स्व-तन्त्रतायै लीलयैव प्राणान् परित्यजतः मुजीबानुगामिनः वीरान् प्रशं-सति च ।

पाकसैनिकानाममानवीयमत्याचारमसहमानानां पलायमानानां बुभु-क्षितानां, नग्नानां मातृपितृबन्धुविरहितानां, पुत्रस्वामिवधूविरहितानां स्त्रीणां पुरुषाणां च लक्षसख्यकानां शरणदानेन, अन्नदानेन, वस्त्रदानेन, आवासचिकित्सा-रक्षाऽभयदानेन च संरक्ष्य बर्बरैः पाकसैनिकैः क्रूरैः हतकैः

दुराचारिभिश्च देवीन्दिरा महता धैर्येण, शौर्येण, औदार्येण च युद्धमाकरोत् । लक्षं पाकसैनिकाः स्वपापेन मृत्युमधिगत्य नामशेषा बभूवुः । यदा भारतीयसैनिकानां प्रहारं सोढुमशक्ताः संजातास्तदा अजा इव स्वात्मसमर्पणं भारतीयसैनिक—सिंहानामग्रेऽकुर्वन् । तथापि स्वादर्शं संरक्षन्ती विजयिनीन्दिरा युद्धविराममुद्घोष्य स्वौदार्यं संसारायादर्शयत् । चाऊनिक्सनादीनामपि मनोरथान् समाप्य तेषामपि दर्पमदीदलत् । चाऊनिक्सनादयः इन्दिरायाः शौर्यमौदार्यं च दर्शं दर्शं परं विस्मयमापन्नाः न किमपि वक्तुमशक्नुवन् अपितु तूष्णीमेव स्व्यकुर्वन् । पराभूताः पाकसैनिकाः न कुत्रचिच्छरणमवाप्नुवन् । भारतीयसेनाऽग्रे शास्त्राणि परित्यज्य तेषामेव शरणमागच्छन् । येन पूर्वीपाकिस्ताननामा भूभागः स्वतन्त्रः बंगलादेशः सम्पन्नः । विश्वेऽस्मिन्नतः पूर्वं कदापि कस्मिन्नपि देशे सेनायाः कस्या अपि एतावती भूयसी सख्याऽऽधुनिकप्रचुरशस्त्रयुक्ता अपि नव आत्मसमर्पणमकरोत् । केवलं सर्वप्रथमं भारतीयसेनाया समक्षं भूयसी पाकसेनाऽऽत्मसमर्पणमकरोत् । भारतीयसेना निःस्वार्थसेवाभावेन शौर्येण च पाकसैनिकान् पराजित्य बन्दीकृत्य विश्वे महतीं प्रतिष्ठां यशश्च लेभे ।

एतत्सर्वमिन्दिराया एवाऽसाधारणः प्रभावोऽस्ति । येन देशः विश्वे गौरवेण एव शिरः उन्नमय्य शोभते । आशास्महे च सदा देशोऽस्माकमस्या संरक्षणेनोत्तरोत्तरमुन्नतिं ख्यातिं समृद्धिं च लप्स्यते । वस्तुतः देवीन्दिरा तदकरोत् यत्पित्राऽपि न कृतम् । धन्येयमिन्दरा यस्याः हस्तेऽस्माकं देशस्य शासनसूत्रं विद्यते । वयमपि धन्याः ये दुर्गारूपाया इन्दिराया प्रधानमन्त्रित्वे सुखेन निवसामः ।

## ५०. धर्माचरणं यन्महत्त्वमधिकतमं रोचते

धर्मस्य योऽर्थोऽस्माभिरद्यावगम्यते नासौ आदौ निर्धारित आसीदस्मत्पूर्वजैः । कर्त्तव्यपालनं, सदाचारश्च सामान्यतो धर्मं निरदिशताम् । धर्मस्योत्पत्तिर्वस्तुतो मानवीयसद्भावनायाः प्रेरणायै, मानवानामाध्या

त्मिकपिपासाया निवृत्तये, तेषु नैतिकभावनानां चोद्‌बोधनायाऽभूत् । संक्षेपेण नैनिकताया सदाचारस्य च मानवनिर्धारिता नियमा धर्मत्वेना-मिधातुं शक्यन्ते । नैतिकतायाः सदाचारस्य च मूल्यं जीवने निर्विवादं महदास्ते । एवं जीवने धर्मस्य महत्त्वपूर्णम् स्थान सिध्यति ।

भौतिकवादिनः खलु धर्ममुपेक्षन्ते, विज्ञानं चोपासते । विज्ञानमर्थ-समुदादेयम्, तदनिवार्यतया धर्मेण नियमितं स्यात् । अद्य संसारे सत्स्वपि भौतिकसुखसाधनेषु शान्तिर्न लक्ष्यते, तस्यैकं कारणं धर्मोपेक्षा-ऽध्यात्मिकदृष्टिकोणस्य चानादरोऽस्ति । विज्ञानसाहाय्येन मानवेन जितानि खलु पञ्चमहाभूतानि परं नात्मा वशीकृतः । अद्य खलु विज्ञान-मग्नैरान्तरिकशुद्धेर्भावना विस्मृता, कर्त्तव्यपालनस्य महत्त्वं नोररीकृतम्, नैतिकता दूरे प्रस्थापिता, सत्कर्माणि चापकृतानि । धर्मः खलु मानवे मानवता प्रतिष्ठापयति, त तदीयकर्त्तव्यमादिशति, तस्मिन्मानवीयगुणानां बीजमावपति, सत्कर्मपथे चेति प्रेरयति । किमधिकम्—

**धम दर्थः प्रभवति धर्मात्प्रभवति सुखम् ।**

**धर्मेण लभ्यते सर्वं धर्मसारमिदं जगत् ।**

कर्त्तव्यपालनं हि धर्माचरणे मह्यमधिकतमं रोचते । संसारे मानव-स्य जीवनं कर्त्तव्यैः परिपूर्णमस्ति । एषां कर्त्तव्यानां परिपालनं ह्यस्माकं धर्मः । अनेनास्माकं चरित्रस्य शोभा वर्धते । कर्त्तव्यपालनं न्यायमा-श्रयते । अन्तरात्मानुकूलमाचरणं न्यायः खलु । न कदापि आत्मविरुद्धं समाचरेत् । यत्रान्तरात्मा सन्देहं कुर्यात्तत्र कदापि न प्रवर्त्तेत । कर्त्तव्य-पालनेऽसकृद् बहवो विघ्नाः प्रतिहनिष्यन्ति परं धैर्यावलम्बने तु ते स्वतो विनंक्ष्यन्ति ।

चित्तस्य चञ्चलता, उद्देश्यस्यास्थिरता, मनसो निर्बलता च कर्त्तव्य-पालने नितरां विघ्नन्ति । अतएव एताः सर्वथा हेयाः । इतिहासोऽप्यस्य साक्षी यत्कर्त्तव्यपरायणाएवास्मिन् संसारे कीर्ति सत्कारञ्चलभन्त । कर्त्तव्यपालनाद्विमुखास्तु अवनतिगर्त्तेऽपतन् अकीर्तिमपमानञ्चालभन्त । एकदा समुद्रमध्ये श्वेतदीपवासिनो बृहत्पोते एकं महच्छिद्रमभवत् । तत्रा-

नेका नार्योऽनेके नराश्चारूढा आसन्। सर्वेषामुपायानां वैफल्ये सति एकाया नौकाया साहाय्येन सर्वासां योषितां संरक्षणं कृत्वा सहर्षाः सर्वे ते बृहत्पोतेन सार्धं समुद्रे निमग्नाः। यदि ते स्वप्राणानां परित्राणे एव निरता भवेयुस्तदा ललनाः शिशूंश्च ते कदापि संरक्षितुं न पारयेयुः। कर्त्तव्य-पालनस्य भावनया प्रेरिता एव ते स्वप्राणानां बलिदानं कृतवन्तः। एतत्प्रतिकूलं फ्रांसदेशनिवासिभिर्निमज्जतः बृहत्पोतात्प्रपलायनं कृत्वा स्वप्राणास्तु संरक्षिताः परं शिशवो योषिताश्च तत्रैव परित्यक्ताः। अस्याः कुत्सितप्रवृत्त्याः कृत्स्नं जगन्निन्दामकरोत्। एवं ये स्वार्थपरायणाः कर्त्तव्य-पालनं न कुर्वन्ति तान्प्रत्येकं गर्हते।

कर्त्तव्यपालनस्य सत्यतायाश्च घनिष्ठः सम्बन्धोऽस्ति। सत्यसन्ध एव कर्त्तव्यपालनं समुचितं कर्त्तुं प्रभवति। सत्येनैव संसारस्य सकला व्यवहाराः सिध्यन्ति। अतएव सत्यताया जीवने स्थानं निर्विवादं महत्त्व-पूर्णमास्ते। संसारे सर्वेषु पापेषु अनृतमतिशयम् गर्हितम् विद्यते। असत्यं पापात्कौटिल्यात्कातर्याच्च प्रभवति। सत्यं हि कर्त्तव्यपालनस्य भावनां जागरयति। सत्यशीलोऽनायासेनैव कर्त्तव्यपालनम् कर्त्तुं प्रभवति। कर्त्तव्यपालने मनागपि कष्टं स नानुभवति। सत्यव्रता एव कर्त्तव्य-पालनम् कर्त्तुं क्षमाः। अनायासेनैव कर्त्तव्यपालनम् कुर्वन्तस्ते सुखं समृद्धिञ्च लभन्ते।

## ५१. संघे शक्तिः कलौ युगे

संसारेऽस्मिन् कोऽपि मानवः संघं विना किमपि कर्त्तुं न प्रभवति। अतएवोक्तमस्ति यत् कलियुगे संघे समुदाय एव शक्तिः सामर्थ्यमधि-गम्यते। एतत्तु कतिपयैरेवोदाहरणैसिद्ध्यति।

यदाऽस्माकम् देशः पराधीन आसीत्तदा लोकमान्यतिलकगान्धि-सुभाषादयः जनानामेकं संघं विधाय स्वाधीनतासंग्रामं प्रारम्भन्त। ग्रामे-ग्रामे नगरे-२ स्थाने-२ सभाः कृत्वा जनान् एकत्रीकृत्य देशानुरागभक्ति-निष्ठादीनां भावानुपदिश्य संघं कृत्वा स्वतन्त्रताऽऽन्दोलनमकुर्वन्—संघं

विना शासनेनाऽसहयोगान्दोलनम् कुर्वन्तः बन्दीगृहेषु लक्षं जनाः श्वान इव प्राक्षिप्यन्त । भारतीयानामेकतां दर्शं दर्शमांग्लशासकाः व्याकुलीभूय भारतं स्वतन्त्रमकुर्वन् । अतः कथ्यते यत् "संघे शक्तिः" तत्सत्यमेवास्ति । चेदेकः कोऽपि स्वतन्त्रता—संग्रामं कुर्यात् तमांग्लशासकाः क्षणेनैव परलोकाध्वनीनं कुर्युः । संघेऽपि बहून् देशभक्तान् घातयित्वाऽऽन्दोलनम् शिथिलीकर्तुं प्रायतन्त । परं यदा भूयान् संघः स्वतन्त्रताऽऽन्दोलनाद् बह्वीः यातनाः भुक्त्वाऽपि न व्यरमत तदाऽऽंग्लशासकाः विवशीभूय भारतम् परित्यज्य स्वदेशमगासरन् ।

अद्यापि येषां जनानां संघोऽस्ति स स्वाग्रहं शासनेन स्वीकारयित्वा साफल्यमाप्नोति । यतश्च राजकीयकर्मचारिणां विशालो भूयांश्च संघोऽस्ति । अतस्ते राज्यकर्मचारिणोऽचिरेणैव शासनेन स्वाग्रहं स्वीकारयन्ति । एवमेव छात्राणामपि प्रबलः संघोऽस्ति तेऽप्यचिरेणैव शासनं मनोऽनुकूलं कृत्वा यथारुचि व्यवहरन्ति । धूम्रयानकर्मचारिणोऽपि संघस्य बलेन स्वाग्रहमचिरेणैव शासनेन स्वीकारयित्वा यथेष्टं व्यवहरन्ति । कोषालयानामपि कर्मचारिणां विशालसंघोऽस्ति तेऽपि यथाकामं शासनमनुकूलं कुर्वन्ति स्ववेतनवृद्धयादिकं च कुर्वन्ति । परं येषां कोऽपि संघः नास्ति तेषां वार्तां, चीत्कारं कोलाहलं च कोऽपि शासकः न शृणोति, न च ध्यानं ददाति । यथा च कृषकाणां न कोऽपि संघः विद्यतेऽतस्तेषां कोऽपि वार्तां, चीत्कारं करुणाक्रन्दनं, दैन्यवचनं च शृणोति । यथेष्टं तेषां गोधूमादीनि वस्तूनि स्वल्पमूल्येनैव क्रीणन्ति च कालान्तरे प्रचुरमूल्येन व्यापारिणः गोधूमादीनि विक्रीणन्ति । कृषकाः इक्षुदण्डानि उत्पादयन्ति स्वल्पमूल्येन शर्करायन्त्रचालकानां स्वामिनां हस्तेषु विक्रीणन्ति परं यदा तेषां कृषकाणां बालकबालिकानां विवाहादयो संस्काराः भवन्ति तदा ते शर्करायै इतस्ततः परिभ्रमन्ति, जिलापूर्त्यधिकारिणां द्वाराणां धूलिवन्दनं च कुर्वन्ति परं ततोऽपि निराशीभूय रिक्तहस्ता एव समायान्ति । अस्य एकमेव कारणमस्ति यत्तेषां कृषकाणां कोऽपि संघः नास्ति । संघाभावादेव ते परिभूयन्ते, तिरस्क्रियन्ते च । संघं विनाऽस्मिन् कलियुगे जीवनमपि दुर्भरमस्ति ।

ये स्वसंघं विधाय एकस्मिन्नेव समये यत्र कुत्रचिद गच्छन्ति तत्र तत्र सर्वमपि तेषां कार्यजातं साफल्यं प्राप्नोति। संघाभावे न कोऽपि कस्यापि कामपि वार्तां श्रृणोति। संघं दृष्ट्वा भयभीताः सन्तोऽधिकारिणः संघस्य वाञ्छामाशु पूरयन्ति। अतः सर्वैरपि कलियुगेऽस्मिन् संघो विधेयः। संघस्य महत्त्वं प्रदर्शयता केनाऽपि लिखितमस्ति यत्—

संहतिः श्रेयसी पुंसां स्वल्पैरपि गुणैरपि।
तृणगुंणत्वमापन्नैर्वध्यन्ते मत्तदन्तिनः।।

तृणानां क्व सामर्थ्यं मत्तगजानां च क्व सामर्थ्यं तदापि यदा तृणानि गुणत्वेन रज्जुरूपाणि जायन्ते तदा रज्जुभिः मदोन्मत्ताः हस्तिनोऽपि वद्धुं शक्यन्तेऽतः पुरुषाणां संघः तेभ्योऽतीव श्रेयसे भवतीति नात्र संशीतिः।

एकदा सपरिवारश्चित्रग्रीवनामा कपोतराजः तण्डुलकणलोभेन व्याघ्रपाशेनिपतितोऽभवत्तदा ते सर्वे मिलित्वा एकशवतीभूय पाशमादाय उदपतन्-तदवलोक्य व्याधस्याऽऽशा निराशामवाप। अतः संघे महती शक्तिरस्ति नात्र विषये संशयलेशोऽस्ति।

मदनमोहनमालविना, गान्धिना, महर्षिणा दयानन्देन च संघुष्टं यत् संघ एव शक्तिर्विद्यतेऽतः सर्वैरपि संघोऽवश्यं विधेयः। संघस्य शिक्षा मधुमक्षिकाभ्यः, यवनेभ्यः मेषेभ्यः, काकेभ्यः, वानरेभ्यश्च, शलभेभ्यश्च शिक्षणीया। यदा कोऽपि पुरुषः मधुमक्षिकास्थानमाक्रमते तदा मधुमक्षिकाः तमनुधावन्ति। तस्य प्राणा एव संकटे निपतन्ति। एवमेव वानरा अपि भवन्ति। अत. वयमपि अवश्यं संघं निर्माय स्वशक्ति सबलां, स्वाभीष्टां कुर्याम। यदुच्यते यत् "संघे शक्तिः कलौ युगे" इति कथनं तु सर्वथा सत्यं समीचीनञ्चास्ति।

संहतिः श्रेयसीः पुंसां विशेषतः कलौयुगे।
तुषैरपि परित्यक्ताः न प्ररोहन्ति तण्डुलाः।।

अपि च—

बहूनां चैवसत्त्वानां समवायो रिपुञ्जयः।
वर्षन्धाराधरो मेघस्तृणैरपि निवार्यते।।

अपि च—

**बहूनामप्यसाराणां समवायो हि दुर्जयः ।**
**तृणैर्गुणत्वमापन्नैः वध्यन्ते मत्तदन्तिनः ।।**

विशेषतः कलियुगे संघस्य शक्तिर्विद्यतेऽतोऽश्वयं महता प्रयत्नेन संघो विधेयः तदनुसारं च व्यवहरणीयमपि । एष एव शवतेः शोभनः पन्थाऽस्ति ।

## ५२. उद्यानशोभा

संसारेऽस्मिन् बहूनि वस्तूनि रमणीयानि दरीदृश्यन्ते तेषूपवनस्य शोभाऽद्वितीयाऽनुपमा चास्ति । नगराद् ब्रहिः, ग्रामाद्वहिः, प्रासादेभ्यः, हर्म्येभ्यश्च बहिरुपवनानिभवन्ति । उपवनानां शोभाऽतीवरमणीया भवति । उपवनेषु विविधाः पुष्पलताः वृक्षाश्च भवन्ति । मध्यभागे विशालं क्षेत्रमपि भवति यस्मिन् हरिततृणानां पङ्क्तयो विशेषेण मनांसि संमोहयन्ति । तत्र च भ्रमणाय समागतानां मानवानां बालकबालिकानां रमणीनाञ्च कृते समुपवेशनाय रम्यस्थानानि निर्मितानि भवन्ति । तत्र जनाः सायाह्ने स्वकार्येभ्यः मुक्तिं प्राप्याऽऽगच्छन्ति, उपविशन्ति, क्रीडन्ति, मनोविनोदञ्च कुर्वन्ति, स्वच्छशीतलवायुं च सेवन्ते । स्वदिवसतापं तत्र शान्तिं नयन्ति ।

कुत्रचित् सुरभितपुष्पाणां पङ्क्तयो जनान् आमन्त्रयन्ति । तेषु च गुञ्जन्तः भ्रमराः स्वमधुरशब्देन जनानां कर्णेन्द्रियाणि आह्लादयन्ति । कुत्रचिज्जलाशयाः स्वशीतलतरङ्गजलेन परिभ्रमद्भ्यः पुरुषेभ्यः बालवृद्धयुवकयुवतीभ्यश्च मनांसि आनन्दयन्ति । उद्यानस्यैकभागे कुत्रचित् बालकानां क्रीडनाय मनोरञ्जनाय च स्वल्पदोलाः विराजन्ते । तत्र च बालकाः सानन्दं सस्पृहं सोल्लासं च क्रीडन्ति कूर्दन्ति मनोविनोदं च कुर्वन्ति ।

उद्यानानां स्वमेकम् वैशिष्ट्यं भवति । यस्मिन् देशेऽधिकान्युपवनानि भवन्ति तत्र वर्षा समये समये भवति । यत्र वृक्षाणामभावो भवति तत्र

वर्षाऽपि स्वल्पैव भवति। यथा राजस्थानादिषूपवनानां वृक्षाणां च संख्याऽल्पीयसी वर्ततेऽतस्तत्र वर्षा स्वल्पैव भवति। मनुष्यैस्तथा प्रयतितव्यं यथः तेषां प्रदेशे देशे च बहून्युपवनानि बहवो वृक्षाश्च स्युः। प्रथमन्तु वृक्षेभ्य, पत्राणि पुष्पाणि, फलानि च प्राप्यन्ते ततः शुष्केषु वृक्षेषु काष्ठादिकम् ज्वलनादिभ्यः प्राप्यते। वृक्षास्तु अस्माकं दूषितवायुं स्वयं गृह्णन्ति तथा स्वच्छं स्वास्थ्यकरं शीतलं च वायुमस्मभ्यं ददति।

उपवनानां चित्रविचित्रवर्णानि पुष्पाणि केषां मनांसि न समावर्जयन्ति अपि तु पुष्पाणि स्वरसुभिणा सर्वेषामपि मनांसि आकर्षन्ति प्रमोदयन्ति, प्रलोभयन्ति च। उद्यानानां रमणीया भव्या चित्रविचित्राऽवश्यं शोभा द्रष्टव्या भवति। येषां मनांसि उद्यानेषु न रमन्ते ते मनुष्यास्तु मनुष्या एव न सन्ति-अपि तु हृदयहीनाः पशुतुल्याः भवन्ति। उद्यानस्य जलाशयेषु बहुवर्णानि कमलानि विकसन्ति कानिचित्तु रक्तवर्णानि कानिचित्तु श्वेतवर्णानि कानिचित्तु नीलवर्णानि, कानिचित्तु पीतवर्णानि च भवन्ति। तेषां सुरभिणा समाकृष्टाः भ्रमराः मधुरं तथा गुञ्जन्ति यथा सर्वेषामपि मनांसि सहसैव कमलेषु एवाऽऽसक्तानि भवन्ति। जलकमलभ्रमरगुञ्जारवाणां मनोहरतां वर्णयन् महाकविर्भर्तृहरिरलिखत्—यत्

न तज्जलं यन्न सुचारुपङ्कजं,
न पङ्कजं तद्यदलीनषटपदम्।
न षट्पदोऽसौ न जुगुञ्ज यः कलं,
न गुञ्जितं तन्न जहार यन्मनः॥

केवलमेकैव इयं शोभा उद्यानोत्कर्षणाय पर्याप्तमस्ति। यत्-उद्यानस्य महती शोभा जलाशयैस्तत्र विकसितैः कमलैः तत्रोपविष्टै भ्रमरैः च तेषां मधुरगुञ्जनैरेव भवतीति। यस्मिन्नन्यानि बहूनि रम्यस्थानानि समुपवेष्टुं निर्मितानि सन्ति। हरिद्वर्णं विशालं मध्यक्षेत्रं सुरभितं विराजते। अनेकप्रकाराणां वृक्षाणां लतानां पङ्क्तयो विराजन्ते। एतादृशीमनुपमामुद्यानस्य शोभां काऽन्या शोभा तोलयितुं प्रभवति न कापीत्यर्थः।

अनेनैतत्कथयितुं शक्यते यदुद्यानस्य शोभा भृशमाह्लाददायिनी,

शान्तिदायिनी, सुखदायिनी, मनोरञ्जिका, विचित्राऽनेकरूपा च भवति। येन पुरुषेण एतादृशी उद्यानशोभा नाऽवलोकिता तस्य जन्मैव निरर्थकमिति मन्यामहे। धन्येयमुद्यानशोभा या सर्वानपि समाकर्षितुं शक्ताऽस्ति।

## ५३. ऋतुवर्णनम्

परमात्मनः सर्वाऽपि सृष्टिर्विचित्राऽस्ति। तत्र हि साधारणवस्तुन आरभ्योऽसाधारणवस्तुपर्यन्तं प्रत्येकं वस्तुन एकं विशिष्टं। महत्वमस्ति। तत्रापि च ऋतूनाम् प्रमुखतमं गौरवमस्ति। मुख्यर्तवः षट् सन्ति। तेषां नामानि (१) वसन्ततुं:, (२) ग्रीष्मतुं: (३) वर्षतुं:, (४) शरद्दतुः, (५) हेमन्ततुं: तथा (६) शिशिरतुं: इति सन्ति। षण्णामृतूनां मुख्यतुं: वसन्तोऽस्ति। अतः वसन्तः ऋतुराजः कथ्यते।

**वसन्ततुं:**—वसन्ते शीतप्रकोपः शाम्यति। कोकिलाः मधुरं कूजन्ति। सूर्यरश्मिषु तैक्ष्ण्यमायाति। गोधूमादीनि अन्नानि परिपक्वानि जायन्ते। दिशः सुरभिताः भवन्ति। जनाः प्रसन्नाः सन्तः नवानि पीतवस्त्राणि धारयन्ति, मनोविनोदं च कुर्वन्ति, गायन्ति, नृत्यन्ति, हसन्ति, क्रीडन्ति च। आम्रेषु मञ्जर्यः निर्गच्छन्ति। वसन्तस्य महानुत्सवः होलिकोत्सवः कथ्यते। अस्मिन्नुत्सवे फाल्गुनमासस्य शुक्लपक्षस्य पूर्णिमायां तिथौ होलिकादाहः क्रियते। प्रातश्चैत्रमासस्य प्रतिपदायां धूलिवन्दनं परस्परं रङ्गप्रक्षेपणं रङ्गक्रीडनं सुगन्धितचूर्णादि (गुलालादि) विलेपनं च क्रियते। मध्याह्नोत्तरं नवानि वस्त्राणि परिधाय जनाः स्नेहपूर्वकं स्पृश्यास्पृश्यभावं विस्मृत्य सोल्लासं परस्परं कण्ठे मिलन्ति स्वागतं च कुर्वन्ति ताम्बूलादिकं च ददति। वसन्ते सर्वाऽपि पृथ्वी नूतनपत्रपुष्पाणि धृत्वा नितरां शोभतेऽतः वसन्त एव "ऋतुराजशब्देन" सत्क्रियते, व्यवह्रियते, सम्बोध्यते च। वसन्तानन्तरं ग्रीष्मतुं: समायाति।

**ग्रीष्मतुं:**—ग्रीष्मर्तौ सूर्यतापश्चण्डतरीभवति। सर्वाऽपि मही सन्तप्ता भवति। सर्वेऽपि वन्यपशवः नागरिकाश्च तीव्रौष्ण्येन भृशं व्याकुली-

भवन्ति। तीव्रतरः पवनः प्रवहति। मार्गेषु सर्वत्र रेणुरेव गे दृश्यते। जनाः शीतलछायां कामयमानाः इतस्ततः परिभ्रमन्ति न च शान्ति लभन्ते। शीतलतायाः कृत्रिमोपाया अपि निष्फलीभवन्ति। सर्वेऽपि वृक्ष-लतादयोऽपि वनस्पतयः पशुपक्षिणः बालकवृद्धयुवानश्च प्रचण्डतरेण सूर्यातपेन व्याकुलीभूताः जलं, शैत्यं, छायामेव च कामयन्ते। रात्रौ स्वेदार्द्र विलन्ना जनाः यथेष्टम् निद्रामपि न लभन्ते। ग्रीष्मानन्तरं वर्षर्तुः समायाति।

**वर्षर्तुः**—वर्षासु सर्वाऽपिधरा जलेनाऽऽप्लाविता भवति। मेघा गगनमाच्छाद्य गर्जन्ति वर्षन्ति च येन पशुपक्षिणः वृक्षादयो वनस्पतयः मनुष्याश्च नितरां मोदमावहन्ति। मेघाना गर्जनमाकर्ण्य मयूराः वनेषु नृत्यन्ति केकारवं च कुर्वन्ति आकाशे मेघेषु चपला पुनः पुनर्दीप्यते। सर्वत्रापि तृणानां, वृक्षाणां, लतानां, धान्यादीनां हरीतिमा सर्वानपि आनन्दयति, प्रमोदयति, सुखशान्ती च प्रददाति। नद्यः नदाः जलाशयाश्च जलेन परिपूर्णा भवन्ति। नवशस्येन मही श्यामला भूत्वा नितरां शोभते। चेद् वर्षा न भवेत् तदाऽन्नोत्पादनं न सम्भाव्यतेऽन्नं विना प्राणिनां प्राणरक्षणमेव दुष्करमस्ति। अतः वर्षर्तोः एकं विशिष्टं महत्वं, स्थानं चास्ति। वर्षानन्तरं शरदृतुः समायाति।

**शरदृतुः**— शरदृतौ मेघाः विलीयन्ते। गगनम् निर्मलम् भवति। मार्गस्य पङ्कः शुष्यति जलं च स्वच्छं भवति। व्यापारिणः विक्रेयवस्तूनि समादाय विक्रेतुमितस्ततः गच्छन्ति। चन्द्रमसश्चन्द्रिका निर्मला जनानां मनांसि भृशमाह्लादयति कासपुष्पाणां शौक्ल्येन सर्वाऽपि धरा श्वेतवर्णा भवति। शरदृतोः महानुत्सवः दीपावलीत्यभिधीयते अस्मिन्नुत्सवे दीपानामवलिः गृहेषु, द्वारेषु, राजमार्गेषु च प्रज्वाल्यते। लक्ष्मीपूजनं च गृहे गृहे क्रियते। श्रूयतेऽय दीपावली नामोत्सवः सर्वप्रथमं भगवतो रामचन्द्रस्य वनादागमनानन्तरमेव जनैरायोजित आसीत्। ततः आरभ्य दीपावल्युत्सवः पृथिव्यां प्रचलितोऽस्ति। शरदृतोरपि स्वमेकं वैशिष्ट्यमस्ति। शरदनन्तरं हेमन्तर्तुः पदमादधाति।

**हेमन्तर्तु**:—हेमन्ततौ सूर्यस्य तापः मन्दतामुपजायते। पवनः शीतलः प्रवहति। अग्निः सूर्यस्य किरणाश्च प्रियाः प्रतीयन्ते। जलस्नानं जलस्पर्शश्च जनेभ्यो न रोचते। शीतप्रकोपः सर्वानपि व्याकुलीकरोति। शैत्येन हस्तपादौ न प्रसरतः। दिनानि स्वल्पीभवन्ति। रात्रयः दीर्घतरीभवन्ति। निद्रा सुभगा सरसा च प्रतीयते। हेमन्तानन्तरं शिशिरः समायाति।

**शिशिरः**—शिशिरतौ शीतः प्रचण्डतरो भवति। जनाः शैत्येन दन्तवीणां वादयन्तः कम्पमानाः सीत्कारञ्च कुर्वन्तोऽनलं सेवन्ते। रात्रौ गगनान्नीहाराः निपतन्ति येन दिवाऽपि सूर्यः पूर्णरूपेण न दृश्यते। शैत्याधिक्यात् सूर्यः चन्द्र इव प्रतीयते। कमलान्यपि पूर्णरूपेण न विकसन्ति अपितु नीहारपातात्कमलपत्राणि नश्यन्ति वृक्षाणां लतानां च पत्राणि पीतवर्णानि भवन्ति। क्रमेण वृक्षेभ्यः लताभ्यश्च पीतपत्राणि भूमौ निपतन्ति। शिशिरेऽनलोऽमृतायते। तथा चोक्तमस्ति—

"अमृतं शिशिरे वह्निः"

केनाऽपि षण्णामृतूनां नामानि वर्णयता व्यलेखि यत्—

**ग्रीष्मोवर्षा शरच्चैव हेमन्तः शिशिरस्तथा।**
**ऋतुराजो वसन्तश्च षडेते ऋतवः स्मृताः॥**

एतेषां षण्णामपि ऋतूनां पृथक् महन्महत्त्वमस्तीति नात्र संशीतिः।

## ५४. ग्रीष्मसमयः

अस्माकं भारतवर्षे षट् ऋतवः भविन्ति तेषां स्वं पृथक् पृथक् महत्वमस्ति। एषु षट्सु ऋतुषु एव ग्रीष्मर्तुरायाति। ग्रीष्मसमये सूर्यकिरणा अत्यधिकं तीव्रा भवन्ति। तदा सूर्यस्यातपोऽसह्यो भवति। सर्वापि मही सन्तप्ता भवति सर्वेऽपि वृक्षादयो वनस्पतयः लताः उपवनानि वाटिकाश्च ग्रीष्मे म्लानतामायान्ति। पवनश्चण्डतरः प्रवहति। मार्गेषु सन्तप्ताः पांशवः उड्डीयन्ते। पथिकाः श्रान्ता स्वेदार्द्रशरीरा छायां कामयमानाः संत्रस्ता व्याकुलीभवन्ति।

ग्रीष्मसमये नदीनां, जलाशयानां, कूपानां च जलानि शुष्यन्ति । पशु-पक्षिणश्च जलाय इतस्चेतश्च परिभ्रमन्ति । कुत्रचिदेव जलं प्राप्नुवन्ति। कृषकाणां क्षेत्राणि शस्यानि च जलाभावेन शुष्यन्ति । इक्षुक्षेत्राणि जलं विना म्लानतामुपयान्ति । बालकाः रोगिणो वृद्धाश्च ग्रीष्मसमये भृशं पीडिताः भवन्ति । सर्वेऽपि शैत्याय स्पृहयन्तः हाहेतिब्रुवन्तः दिनानि यापयन्ति ।

वन्यपशुपक्षिणोऽपि ग्रीष्मे नितरां व्याकुलीभवन्तः कुत्रचिच्छाया-मालोक्यैव तत्र गच्छन्ति परं यदा तत्रापि शान्तिर्न मिलति तदा ततो-ऽप्यन्यत्र गच्छन्ति । एवमेव गमनागमने कुर्वन्तः कुत्रापि सुखं न लभन्ते। ग्रीष्मेण सन्तप्यमानाः भोक्तुमपि न वाञ्छन्ति । केवलं शीतलतामेव कामयन्ते । ग्रीष्मे जलविहारः, जलस्नानं नौकाविहारश्चाधिकं रोचते । स्वेदार्द्रशरीरा जनाः रात्रौ निद्रामपि यथेष्टं न लभन्ते । ग्रीष्मे जनाः शैत्यापादानाय कृत्रिमोपायान् कुर्वन्ति तथापि वास्तविकं शैत्यं नोप-लभ्यते । ग्रीष्मे झंझानिलः प्रवहति येन सकलाऽपि पृथ्वी धूलिसमावृता भवति । ग्रीष्मे रसालवृक्षाः फलन्ति स्वादून्याम्राणि भोक्तुं मिलन्ति। जम्बूफलानि, खर्जूराणि च ग्रीष्म एव फलन्ति पच्यन्ते च ।

ग्रीष्मसमये दिनानि दीर्घतराणि भवन्ति । रात्रयः स्वल्पीभवन्ति। ग्रीष्मकाले जनाः भवनानि प्राचुर्येण निर्मापयन्ति, कृषकाः स्वक्षेत्राणां दूर्वाङ्कुराणि खनन्ति, क्षेत्राणि च कर्षन्ति स्वभवनानि च सज्जीकुर्वन्ति। ग्रीष्मे धनिनः श्रेष्ठिनश्च स्थाने स्थाने, विपणौ, चत्वरे, राजमार्गे च जलं दापयितुं जनान् नियुज्य पुण्यमर्जन्ति । ग्रीष्मे ज्येष्ठमासस्य शुक्ल-दशम्यां गंगास्नानस्य महन्महत्वमस्ति । तत्र सहस्रं जना गच्छन्ति स्नानं च कुर्वन्ति, दीनेभ्यः घटदानं, कूष्माण्डदानं, वस्त्रदानं, उपादद्दानं च कुर्वन्ति ।

ग्रीष्मसमये ज्येष्ठमासस्य शुक्लैकादशम्यां जना उपवासं कुर्वन्ति जलमपि न गृह्णन्ति । इयमेकादशी भीष्मैकादशी कथ्यते । अस्मिन्दिने धार्मिकाः व्रतं कृत्वा यथाशक्तिदानं च ददति । केचिच्जनास्तु पशुमपि

जलं पापयितुं प्रबन्धं कुर्वन्ति। ग्रीष्मे जलदानस्य महन्महत्त्वमस्ति। यथा शिशिरेऽनलदानस्य कम्बलादिवस्त्रदानस्य च महन्महत्त्वमस्ति। अतएव धार्मिकाः शिशिरेऽनलदानं, कम्बलादिवस्त्रदानं च कुर्वन्ति तथा ग्रीष्मे जलदानं कुष्माण्डदानं, व्यजनदानं घटदानं च कुर्वन्ति।

ग्रीष्मे यात्रा न कर्तव्या यतोहि यात्रा महते दुःखाय भवति। ग्रीष्मे पुनः पुनः स्नानं, छायासेवनं च कुर्यात्।

ग्रीष्मे रात्रौ चन्द्रकिरणा एव किञ्चिच्छैत्यं ददति। ब्राह्ममुहूर्त्ते पवनः किञ्चिदेव शैत्यं दधानः प्रवहति। ब्राह्ममुहूर्त्ते एव ग्रीष्मे जनः निद्रां लभन्ते। अन्यथा तीव्रौष्ण्येन भृशं दूयमानाः न कुत्रापि शान्ति, सुखं, चाप्नुवन्ति। ग्रीष्मे यत्र कुत्रचिद्गच्छामस्तत्र सर्वत्रापि महदुष्णताया एव प्रबलप्राबल्यं दरीदृश्यते। यद्दर्शं दर्शं जनाः भृशं क्लिश्यमानाः स्वेदपूर्णाः सन्तः न कुत्रचित्सन्तोषमनुभवन्ति। केवलं महत्युष्णता महत्युष्णतेति ब्रुवाणाः ग्रीष्मसमयं यापयन्ति।

## ५५. वर्षाकालः

ग्रीष्मर्तोरनन्तरं वर्षाकालोऽभ्येति। ग्रीष्मेण सर्वाऽपि पृथ्वी नितरां संतप्यते जनाश्च भृशं व्याकुलीभवन्ति। वर्षासु मेघा आकाशमाच्छादयन्ति गर्जन्ति वर्षन्ति च। जलवर्षणेन पृथिव्याः ताव्रोष्णता शान्तिमेति। कृषकाः वर्षासु स्वक्षेत्राणि कर्षन्ति व्रीह्यादीनि अन्नानि च वपन्ति। सर्वाऽपि पृथिवी हरिद्वर्णा जायते। वृक्षलतादयो वनस्पतयः नितरां शोभामादधति। वर्षां विना अन्नोत्पादनं न सम्भाव्यतेऽन्नं विना प्राणिनां प्राणरक्षा न भवितुमर्हति इत्थं विवेचनेन ज्ञायते वर्षैव सृष्टिपालनहेतुः यतोहि जलवर्षणं विना तृणादिकमपि नोत्पद्यते यत्पशवश्चरित्वा स्वप्राणरक्षां कर्तुं शक्नुयुः जलवर्षणाभावे सृष्टेः स्थितिः कथमपि न संभाव्यतेऽतः जलस्य गणना परोपकारिषु क्रियते। तथाचोक्तमस्ति—

**"नादन्ति शस्यं खलु वारिवाहाः"**
**परोपकाराय सतां विभूतयः॥**

मेघास्तु परोपकारायैव जलं वर्षन्ति। वर्षासु मयूराः मेघगर्जनमाकर्ण्य केकारवं कुर्वन्ति, नृत्यन्ति मोदञ्च प्राप्नुवन्ति। दर्दुराः शब्दं कुर्वन्ति मशकादयो कीटाः मक्षिकाश्च बाहुल्येनोद्भवन्ति। नद्यः नदाः जलाशयाश्च जलभरिताः भवन्ति। व्यापारिणः वर्षासु बहिर्व्यापाराय न गच्छन्ति। महात्मानोऽपि वर्षासु न पर्यटन्ति अपितु एकस्मिन्नेव स्थाने पर्णशाला निर्माय निवसन्ति। वर्षाणां समाप्तायेव महात्मानः पर्यटन्ति। व्यापारिणो राजानश्च वर्षासु निर्गतास्वेव निर्गत्य स्वस्वकार्याणि कुर्वन्ति अर्थात् व्यापारिणो व्यापारं कुर्वन्ति। राजानश्च आक्रमन्ति परान्। वर्षासु ग्रामेषु पङ्कबाहुल्यं जायते। पन्थानोऽवरुद्धाः भवन्ति। वर्षावेगेन च यत्र कुत्रचित् राजपन्थानोऽपि छिन्नाः क्लिन्नाः पङ्किलाश्च जायन्ते। जलवर्षणं विना सर्वत्र हाराकारोऽकालश्च जायते। पशवोऽपि तृणाभावे प्राणान् परित्यजन्ति। वर्षाऽभावे विषूचिकादयोः रोगाः प्रादुर्भवन्ति। जलमेव प्राणिनां प्राणरक्षणकरं प्रथमकारणमस्ति। तथा च कथितमस्ति—

"अप एव ससर्जादौ"

जलस्यानिवार्यतां विज्ञायैव जगत्सवित्रा प्रथमं जलमेवाऽजनि। जलेनैव विद्युत् सम्पाद्यते, जलसंभवेन वाष्पेण धूमयानादीनि संचाल्यन्ते। जलमिदं त्रिविधं प्राप्यते (१) द्रवरूपं, (२) घनरूपं, (३) वाष्परूपं च। द्रवरूपेण जलेन स्नानं, वस्त्रक्षालनं, भोजनाद्याहारपाचनं पानादिकं च विधीयते। घनरूपेण जलेन जले शैत्यमुत्पाद्यते विविधाऽऽस्वाद्यमधुराणि चौष्याद्यवस्तूनि (आइसक्रीमादीनि) निर्मीयन्ते। वाष्परूपेण जलेन धूम्रशकटयः यन्त्रादीनि च परिचाल्यन्ते। वाष्पजलम् औषधेषु च प्रयुज्यते अनेन प्रकारेण जलेन बहवो लाभाः सन्ति।

सृष्टिपालनाय यथा जलमनिवार्यकारणमस्ति न तथाऽन्यत्किमपि विद्यते। जलन्तु वर्षाभ्य एवोत्पद्यतेऽतः वर्षाकालस्य आगमनमतीवाऽऽवश्यकमस्ति। यस्मिन्नवसरे वर्षाः संजायते स एव समयः वर्षासमयः कथ्यते। लोकस्थित्यै वर्षाकालोऽनिवार्यः इति सर्वैरपि स्वीक्रियते, नात्र

विषये कोऽपि संशयस्यावसरोऽस्ति । वर्षाकाल एव लोकपालकः जन-रक्षकः, पशुपालकः, अन्नाद्युत्पादकः, पत्रपुष्पफलजनकः, वृक्षलतागुल्मा-दिपोषकोऽस्ति अर्थात् जलमेव सर्वेषां संसारस्य मूलकारणमस्ति । अतः सर्वैरपि वर्षाकालः वन्दनीयोऽभ्यर्थनीयः सम्माननीयश्च ।

## ५६. प्रायेण हि नरेन्द्रश्रीः सोत्साहैरेव भुज्यते

संसारे राज्यश्रियं सर्वे प्राप्तुमिच्छन्ति । सर्वे एव मानवाः संसारे राज्यलक्ष्मीमभिलषन्ति । परन्तु साहसं विना न कोऽपि इमामधिगन्तुं प्रभवति । ये तेषामेवाश्रये तिष्ठन्ति ते तु विकल्पशतेनैव स्वमनोरथान्पूरयन्ति । परं नेयं महतां प्रवृत्तिः ते तु बाहुबलेनैव तां लभन्ते । अतः एवाह कश्चित्कविः—

**प्रायेण हि नरेन्द्रश्रीः सोत्साहैरेव भुज्यते ।**

उत्साहस्य जीवने महत्त्वपूर्णं स्थानमस्ति । सोत्साहा हि उत्साहेनैव सर्वाणि कार्याणि सम्पादयन्ति । न कदापि परेषामाशया तैः किमपि कार्यमारभ्यते । संशयमारुह्य ते सिद्धिं न लभन्ते । दुष्करमपि कार्यं तेऽनायासेनैव सम्पादयन्ति ।

सोत्साहाः हि वीरेश्वरा भवन्ति । ते एव संसारे सुखमधिगच्छन्ति, भुञ्जन्ति च वसुन्धराया भोगान् । सुष्ठु आह कश्चिन्नीतिविशारदः—

**'वीरभोग्या वसुन्धरा ।'**

येषामुत्साहशक्तिर्भवति ते स्वल्पा अपि गुरून्विनयन्ते । सुष्ठु आह कश्चिन्नीतिकारः—

**हस्ती स्थूलतरः, स चांकुशवशः, किं हस्तिमात्रोऽङ्कुशो,**
**दीपे प्रज्वलिते प्रणश्यति तमः किं दीपमात्रं तमः ?**
**वज्रेणापि हताः पतन्ति गिरयः, किं वज्रमात्रो गिरि-**
**स्तेजो यस्य विराजते न बलवान, स्थूलेषु कः प्रत्ययः ॥**

साहसिकैर्लक्ष्मीः प्राप्यते । ते एव युद्धक्षेत्रे साहसं कृत्वा विजय-लक्ष्म्या वरणं कुर्वन्ति । उत्साहस्योत्कृष्टता सर्वैर्मुक्तकण्ठेनाङ्गीकृता—

उत्साहो बलवानार्य, नास्त्युत्साहात्परं बलम् ।
सोत्साहस्य हि लोकेषु न किञ्चिदपि दुर्लभम् ।।

उत्साहशक्तिविहीनास्तु कदापि समुन्नतिपदवीं न लभन्ते । ते विघ्नभयेन न किमपि कार्यं समारभन्ते । अस्मिन् संसारे न किमपि कृत्यं तैः क्रियते । निरर्था तेषां शक्तिः, निष्फलञ्च तेषां जन्म । एतान् लक्ष्यीकृत्य चारु आह कश्चिन्मर्मज्ञः—

निरुत्साहस्य दीनस्य शोकपर्याकुलात्मनः ।
सर्वार्था व्यवसीदन्ति व्यसनं चाधिगच्छति ।।

नृपाणां नृपत्वस्य मूलमेवोत्साहः । सोत्साहा हि राजानः सम्यक् प्रजानां पालनं कुर्वन्ति । शत्रून् तिरस्कृत्य ते स्वतेजसा भुवि राजन्ते । सोत्साहा राजानः सौख्यं वितरन्ति, कर्त्तव्यपालनञ्च कुर्वन्ति । प्रजास्तेषां शासने सुखेन निवसन्ति । न तान् शत्रुभयं पीडयति ।

इतिहासोऽप्यस्य साक्षी यत्सोत्साहानां कृते नह्यस्मिन् संसारे दुष्करं कार्यमस्ति । संसारे ये महापुरुषा अस्मत्समक्षमविद्यमाना अपि कीर्त्या भुवि विराजन्ते, तेषां जीवनं समर्थयति तथ्यमिदं यदुत्साह एव मानवोन्नतेर्मूलमन्त्रः । पुरुषोचित पौरुषस्य साहाय्येन भगीरथेन स्वर्गाद् भगवती गङ्गा पृथ्वीतलमानीता । श्रीरामेण समुद्रेऽपि सेतुर्बद्धः, पाण्डवैरपहृतमपि स्वकीयं साम्राज्यं पुनरपि लब्धम् । अतः सुष्ठु आह कश्चित्कविः—

प्रायेण हि नरेन्द्रश्रीः सोत्साहैरेव भुज्यते ।

## ५७. अविवेकः परमापदां पदम्

संसारेऽस्मिन् सर्वोऽपि जनः सम्पत्तिमेव कामयते परं यदाऽविवेकेन सम्पत्तिमिच्छति, व्यवहरति च तदा सम्पत्तिलाभस्थाने विपत्तिमेवाऽऽप्नोति । अत एव अविवेकः अविमृश्य कार्यकरणमापदामेव हेतुर्भवतीति नात्र संशीतिः । एतदैतिहासिकैर्दृष्टान्तैः परिपुष्यते । लङ्काधिपो रावणोऽविवेकेनैव विष्णोरवतारस्य श्रीरामचन्द्रस्य धर्मपत्नीं जनकराजपुत्रीं

सीतामहरत् । तस्य परिणामस्तु सर्वैरपि ज्ञायत एव यत्तस्य रावणस्य वंशे कोऽपि जलदाताऽपि नावशिष्टः ।

कैकेयी महाराजस्य दशरथस्य कनिष्ठराज्ञी रामस्य राजतिलकावसरेऽविमृश्यैव विवेकं विनैव वरद्वयं दशरथमयाचत । येन दशरथस्य मृत्युः रामलक्ष्मणसीतादीनां वनगमनं, कौशल्यासुमित्रादीनां वैधव्यं भरतस्य च व्याकुलतादयोविपत्तयः समभूवन् । चेत् कैकेयी विमृश्य कार्यं कुर्यात् तदाऽऽपत्तिः दशरथपरिवारे नागच्छेत् ।

दुर्योधनोऽपि पाण्डवानां सन्धिप्रस्तावमविवेकेनाहङ्कारेण चास्वीकृत्य महतीं कुलनाशविपत्तिं प्राप्य स्वयं भीमगदया मृत्युमध्यगच्छत् । एवमेव शिशुपालोऽपि राजसूययज्ञे भगवन्त श्रीकृष्णमधिक्षिपन् भगवता श्रीकृष्णेन व्यापादित आसीत् । येऽविमृश्य कार्यं कुर्वन्ति ते विपत्तावेव निपतन्ति । पृथ्वीराजजयचन्द्रदयो नृपाः अविकेन परस्परं कलहं कुर्वाणाः यवनैरपमानं प्राप्य महतीमापत्तिमासाद्य मृत्युमवाप्नुवन् । देशश्च परतन्त्रतामवाप अविवेकेन कृतं कर्म आपत्तय एव भवतीति नात्र संशयो विधेयः ।

गतवर्षे पाकशासकाः अविवेकेन बंगलादेशवासिनामुपरि बहूनत्याचारानकुर्वन् । बालभ्रूणवृद्धरूपस्त्रीणां बुद्धिजीविनां च सामूहिकहिंसादिममानवीयं दुष्कर्मं कुर्वाणाऽल्पवयस्कानामपि बालिकानां शीलभङ्गमकुर्वन् । एतत्सर्वमज्ञानेनैवाऽकुर्वन् । यस्य परिणामेन पाकशासनं सर्वत्र निन्द्यते, धिक्क्रियते, तिरस्क्रियते च । पाकसैनिकाः आधुनिकशस्त्रसज्जा अपि वीरसिंहानां बंगलादेशस्थितानां भारतीयसिंहसैनिकानां समक्षं शस्त्राणि परित्येज्य स्वानाऽऽत्मसादकुर्वन् । ये पाकसैनिकाः अद्यापि— अस्माकं देशे बन्दी जीवनं यापयन्ति ते इमे सैनिकाअविवेकेन स्वकर्मणां परिणामं न ज्ञात्वाऽमानवीयं हिंसादिकं दुष्कर्माकुर्वन् येन महतीमापत्तिमापद्य बन्दीभूताः स्वपरिवारं द्रष्टुमपि न शक्नुवन्ति । विश्वस्य समक्षं गौरवेण शिरांस्यपि उन्नमयितुं न शक्ता सन्ति । अतः अविवेकेन कार्यकरणमापत्तेरामन्त्रणमेव भवति ।

श्रूयते भारविनाम कविः निम्नलिखितश्लोकं कस्यापि श्रेष्ठिनः हस्ते विक्रीतवान् स तु तं श्लोकं स्वकक्षे सर्वत्र विलिख्य नागदन्ते भित्तिकायां चायोजयत्। एकदा स श्रेष्ठी व्यापाराय विदेशं प्राप्तः। तत्र बहूनि वर्षाणि व्यतीत्य रात्रौ स्वदेशं प्राप्तः। गृहमायातेतत्र स्वपत्न्याः पार्श्वे शयानं युवकमेकमद्राक्षीत्। तं च हन्तुं स श्रेष्ठी खड्गमुदतोलयत्। परं तदैव सः खड्गः तस्मिन्नेव पट्टे स्पृष्टोऽभवत् यस्मिन् पट्टे स श्लोकः लिखित आसीत्। तस्य भावोऽयमासीत् यत् मानवः सहसा किमपि कार्यं न कुर्यात्, अविवेकः (मूर्खता) महतामापत्तीनां स्थानं भवति। यः विवेकपूर्वकं कार्यं करोति तं गुणग्राहकाः सम्पत्तयः स्वयमेवागत्य सेवन्ते। तथा चायं श्लोकः—

**सहसा विदधीत न क्रियाम्,**
**अविवेकः परमापदां पदम्।**
**वृणुते हि विमृश्यकारिणं,**
**गुणलुब्धाः स्वयमेव सम्पदः॥**

सः श्रेष्ठी श्लोकमिममवलोक्य स्वखड्ग प्रहरणात् दूरीकृत्य स्वपत्नीं सम्बोध्यापृच्छत्-यत्कोऽयं युवा पुरुषोऽस्ति। तच्छ्रुत्वा साऽऽह यत् तवायं पुत्रोऽस्ति। यदा भवान् व्यापारार्थं प्रस्थितस्तदाऽहमन्तर्वत्नी आसम् तत्सम्भूतोऽयं तवपुत्रोऽस्ति। इत्थं विज्ञाय सः महान्तं हर्षं प्राप्य परममुदितोऽभवत्।

अनेन सिद्ध्यति यत् विमृश्य कार्यकरणं सुखाय कल्याणाय च भवति अविमृश्यकार्यकरणं विपत्तये भवतीति। भगवाञ्छ्रीरामचन्द्रः पुनः पुनः विमृश्य विवेकेन रावणमाक्रमत येन रामो विजयमध्यगच्छत् पुनश्च स्वराज्यं प्राप्य नितरां मुदमवाप। पाण्डवा अपि विवेकेन शान्तिप्रयासादिकं कृत्वा निराशीभूय विवशीभूय च दुर्योधनेन युद्धमकुर्वन् विजयं चाप्नुवन्। एवमेव पाकस्यान्यायमत्याचारञ्च महता धैर्येण विवेकेन च सहमाना भारतस्यप्रधानमन्त्रिपदमलङ्कुर्वाणा देवीन्दिरा विवशीभूय स्वसिंहसैनिकान् पाकसैनिकान् शुनः हन्तुमादिशत् विजयं च प्राप्नोत्।

अतः ये विमृश्य विवेकपूर्वकं व्यवहरन्ति, कथयन्ति, कर्म कुर्वन्ति च ते विजयिनः यशस्विनो, धन्याः, मान्याः सफलजीवनाश्च भवन्ति । एतद्वैपरीत्येयेऽविवेकेन कर्म कुर्वन्ति ते क्रमशः आपत्तिमेव प्राप्नुवन्ति विपत्तावेव च निपतन्ति नात्र संशीतिः । अतः यदुच्यतेऽविवेकः परमापदांपदम्' इति कथनं तु सर्वथा युक्तियुक्तमस्ति ।

## ५८. विश्वशान्तिः

विश्वेऽमिन् यदा शान्तेरभावः संजायते तदा मानवानां चित्तेषु औदासीन्यस्य साम्राज्यमातङ्कस्य च भावः समुत्पद्यते । शान्तिः सन्तोषश्च द्वाविमौ सुखमूलं स्तः । सर्वोऽपि जनः सुखं कामयते, तत्तु शान्तिं विना न लभ्यतेऽतः प्रथमं शान्तिः स्यात् ततो सुखं लब्धुं शक्यते । शान्त्यै मनुष्येषु सोजन्यमौदार्यं स्नेहः दयोत्साहः कारुण्यं, शौर्यं सद्भावना, सहयोगभावना च स्यात् । तदैव देशे, समाजे च शान्तिः स्थापयितुं शक्यते ।

यस्मिन् देशे जनाः परस्परं विद्विषन्तः दिवानिशं कलहायन्ते, परस्परं स्वार्थसिद्ध्यै हानिं ददति, तिरस्कुर्वन्ति, अल्पवस्तुनेऽपि प्राणिहिंसां कुर्वन्ति, स्वल्पलाभायाऽपि देशस्य, समाजस्य, अन्येषामपि जनानां भूयसा क्षतिकरणे न किमप्याशङ्कते तस्मिन् देशे शान्तेः नामापि जनानां हृदि न प्राप्यतेऽपि तु भाषणेष्वेव शान्तिशब्दः श्रूयते पुस्तकेषु च पठ्यते । देशभक्तैः, समाजसेविभिः, राष्ट्रनेतृभिः देशोद्धारकैः तथा प्रयतितव्यं यथा दे , समाजे, विश्वे च शान्तेः स्थापना स्यात् ।

वास्तविकः पूर्णदेशभक्तः देशस्य, समाजस्य चान्यायं, दुर्व्यंहारं भ्रष्टाचारमसन्तोषमशन्तिं च दृष्टुं न शक्नोति । स तथा प्रयतते यथा देशस्य समाजस्य च विषमता, संघर्षः, स्वार्थान्धता, अशान्तिश्च दूरीभवेत् । पूर्णदेशभक्तस्तु नेता सुभाषचन्द्र आसीत् येन स्वदेशे शान्तिस्थापनाय अन्यायिन आंग्लशासनस्य समाप्त्यै प्राणानपि प्रत्यर्पयत् । वस्तुतः नेता सुभाषचन्द्रः त्यागी, कृती, कुलीनः न्यायप्रियः, स्वार्थरहितः,

शौर्यरसाभिभूतः, परमोत्साही, सदाचारवान्, गुणग्राही अन्यायस्याशान्तेरसन्तोषस्य चापहर्ता आसीत्+तस्येदं वक्तव्यमस्ति यत् देशवासिनामस्माकं देशं प्रति किमपि कर्तव्यमस्ति। यदि वयं स्वदेशमादर्शदेशं कर्तुमभिलषामस्तदा वयं देशं प्रति कर्तव्यनिष्ठास्तथा निःस्वार्थाः शान्तिप्रियाः न्यायप्रियाश्च भवेम। त्यागस्य, देशानुरागस्य, शान्तेश्च महत्यावश्यकताऽस्ति। अस्माकमन्तःकरणेषु स्वार्थान्धता अहंकारश्च कथमपि नागच्छेत्। अनेन आचरणेन देशे शान्तेः स्थापनाऽशान्तेश्च निरसनं भवितुमर्हति।

अस्माकं देशे शान्तिस्थापकानां देशभक्तानां भूयसी संख्या वर्तते। तेषु कानिचिदिमानि नामानि सम्प्रत्युद्ध्रियते पाञ्चालदेशकेसरी लालालाजपतरायः, लोकमान्यस्तिलकः, महात्मा गान्धी, राष्ट्रपतिपदस्यलङ्कर्ता राजेन्द्रप्रसादः, मदनमोहनमालवीयः, लालबहादुर शास्त्री चेति सन्ति। एते महानुभावाः सदा विश्वे शान्तिथापनाय प्रयतमाना स्वप्राणान् प्रत्यर्प्य यशः शरीरेणाऽमरतामवापुः।

पुरुषाणामिव शान्तिस्थापकानां देशभक्तानां स्त्रीणामपि भूयसी संख्या वर्तते। तथा हि लक्ष्मीबाई, दुर्गावती, कस्तूरबा, सरोजनी नायडू, विजयलक्ष्मी, भारतस्य प्रधानमन्त्रिपदमलङ्कुर्वन्तीन्दिरा गान्धीचेति सन्ति।

प्रथममन्यायेन, अत्याचारेण, स्वार्थान्धभावेनऽज्ञानेनाऽहङ्कारेण, परस्परसंघर्षेण च युद्ध्वा न्यायस्थापनमत्याचारापनयनं स्वार्थान्धतादूरीकरणमज्ञाननिरसनमहङ्कारापनयनं तथा पारस्परिकं संघर्षमपनीय शान्तिः स्थापयितुं शक्यते।

यदा लोके सद्भावस्य प्राचुर्यमसद्भावस्य चाभावः, क्रूरहिंसकवञ्चकभावानामभावः, कारुण्यौदार्याहिंसकसरलभावानां बाहुल्यं भवति तदा विश्वे शान्तिः स्वयमेव स्थाप्यते। अतो वयं तथा व्यवहरेम यथा देशस्य, समाजस्य, विश्वस्य च शान्तिर्न नश्येत्। रामकृष्णबुद्धाशोकशिववीरराणाप्रतापव्यासवाल्मीकिगान्धिजवाहरलालबहादुरशास्त्रिसमाः व्यवह-

रेम । तेषामाचरणेभ्यः सदाचारस्य, शान्तेः, कारुण्यस्य, शौर्यस्यौदार्यस्याऽहिंसायाः, त्यागस्य, सहयोगस्य, शौर्यस्य, सत्यतायाश्च शिक्षा शिक्षणीया । तदनुकूलं च व्यवहरणेनैव विश्वे देशे, समाजे च शान्तिः स्थापयितुं शक्यते । शान्तिरेव सुखस्य मूलमस्ति । अतएव वेदेऽपि शान्त्रिमन्त्रोऽयं सर्वत्र गीयते । तथा चाह—

ओइम्—द्यौः शान्तिरापः शान्तिरोषधयश्शान्तिः वनस्पतयश्शान्तिः सर्वं शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ।

अत, सर्वत्रापि शान्तिर्यथा स्यात् तथा वयं प्रयतेमहि-शान्तिस्थापनाय च सहयोगकरणमस्माकं परमो धर्मः इति ।

## ५६. संस्कृतस्य रक्षार्थं के उपायाः कर्त्तव्याः

ब्रिटिशशासनात्प्राक् भारते संस्कृतस्य प्रसार सार्वत्रिक आसीत् । पञ्चत्रिंशदुत्तराष्टादेशशततमे [=१८३५] ख्रिष्टाब्दे वंगेष्वेव केवलं लक्षमिताः पाठशाला आसन् । सर टॉमसमहोदयानुसारं द्वाविंशत्युत्तराष्टादशशततमे [१८८२] ख्रिष्टाब्दे मद्रासप्रदेशे सार्धद्वादशसहस्रमिताः पाठशाला आसन् । यासु पञ्चाशदधिकषट्शतोत्तराष्टाशीतिसहस्राधिकैकलक्ष [=१८८६५०] संख्याश्छात्राः शिक्षां लभन्ते स्म ।

परं ब्रिटिशशासकैः सा प्राचीनशिक्षापद्धतिर्विनाशिता । लार्ड मैकॉलेमहोदयेन आङ्गलभाषायाः प्रसारः कृतः । फलतश्च संस्कृतस्य ह्रासयुगमाविरभवत् ।

संस्कृतस्य रक्षार्थं के उपायाः कर्त्तव्या इति प्रश्नोऽद्यास्माकं मनःसु समुत्पद्यते । संस्कृतस्य रक्षार्थं निम्ननिर्दिष्टाः खलु उपाया कल्प्स्यन्ते—

लोकानां हृदयेषु संस्कृतभाषां प्रति अनुरागस्तु विद्यते एव । सर्वप्रथमं तावत्संस्कृतं प्रति लोकेषु अनुरागजागरणार्थम्, संस्कृतशिक्षाञ्च प्रजाभ्योऽर्थकरीं कर्त्तुमस्माभिः प्रयतितव्यम् । संस्कृताध्यापकानां वेतनवृद्धिरपि कर्त्तव्या । आर्थिकदशायाः परिवर्त्तनेन तेषां सामाजिकी स्थिति-

रपि समुन्नता भविष्यति । ततो जनानां संस्कृताध्ययने प्रवृत्तिरनायासेनैव भविष्यति ।

राष्ट्रकोशस्य साहाय्यमपि संस्कृतप्रसारकर्मण्यनिवार्यं खलु । संस्कृतपाठशालानां स्थापनाः कार्याः ।

पाठशालासु विद्यालयेषु च संस्कृतस्यशिक्षणमनिवार्यं कर्त्तव्यम् । महाविद्यालयेषु प्रतियोगितापरीक्षासु चापि यथाशक्ति अस्य शिक्षणेन प्राधान्येन भवितव्यम् ।

संस्कृतभाषा सरलीकर्त्तव्या, येन सामान्याश्छात्रा अपि सौकर्येणास्या रसास्वादनं कुर्वन्तु, एनाञ्च प्रति छात्रलोकस्य अधिकाधिका प्रवृत्तिः स्यात् । सरला भाषा एव लोकप्रिया भवितुर्महति । व्याकरणस्य ताभिस्ताभिर्जटिलाभिर्दुर्बोधवृत्तिभिः संस्कृतभाषाया यथा विमोक्षणं स्यात्तथव प्रयतितव्यम् ।

शिक्षोपयुक्तानि प्राथमिकपाठ्यपुस्तकानि, बालोपयोगिनो गद्यपद्यसंग्रहान् अन्यच्चोपकारि साहित्यं निर्मेयम् । आकाशवाणीद्वाराऽपि संस्कृतं प्रति जनताया रुचिरुत्पादनीया । संस्कृतपरिषदः स्थायापयितव्याः । दैनिकपत्रेषु साप्ताहिकपत्रिकासु च संस्कृताय स्तम्भ एकः प्रदातव्यः । संस्कृतनाटकानामभिनयैः साधारणजनताया रुचिः संस्कृतं प्रत्युत्पादनीया प्रवर्द्धनीया च । पारितोषिकादिभिश्च प्रोत्साहयितव्याः संस्कृतवक्तारः संस्कृतलेखकाश्च ।

एभिरुपायैः संस्कृतस्य प्रसारे एव रक्षाया भागो निहितः । परमत्र विषये यावान्सहयोगः केन्द्रीयसर्वकारस्यप्रान्तीयराज्यानाञ्चापेक्ष्यते तावानेव खलूदारजनताया अपीति सुनिश्चितम् । ●

## ६०. भारतीया संस्कृतिः

ननु केयं संस्कृतिर्नाम ? मानसिकात्मिकप्रभृतीनां शक्तीनां यो विकासः मानवेन कृतः स संस्कृतावन्तर्भवति । कस्यचिदपि राष्ट्रस्य

समुन्नता संस्कृतिरेव तस्य गौरवं विदधाति । अन्यासु विश्वसंस्कृतिषु भारतीया संस्कृतिः नितान्तं प्राचीना गौरवशालिनी च वर्तते ।

कानि खलु भारतीयसंस्कृत्याः मूलतत्त्वानि ? संक्षेपतः एवंप्रकारेण तानि उल्लिखितुं शक्यन्ते ।

**(अ) अध्यात्मभावना धार्मिकता च-**

अध्यमात्मभावना धर्मश्च भारतीयानां जीवने अनुस्यूतौ स्तः । अत्रत्याः जनाः ऐहिकसुखं प्रति निरभिलाषाः सन्तः निर्वाणप्राप्तिं जीवनस्य चरमं लक्ष्यं मन्यन्ते । धर्मपालनस्य आवश्यकतापि जीवनस्य सर्वेषु क्षेत्रेषु निर्दिष्टा । धर्मः खलु धर्मार्थकामेषु (त्रिवर्गे) प्रधानत्वेन निर्दिष्टः ।

**(आ) विश्वनीना उदारता समन्वयभावना च—**

'सर्वभूतेषु चात्मानम्', 'आत्मवत् सर्वभूतेषु' इत्यादीनि वाक्यानि भारतीयानां विश्वजनीनं दृष्टिकोणं उदारतां च उद्घोषयन्ति । अनेनैव भारते विविधतायामपि सांस्कृतिकी एकता वर्तते । अत्र यवना, शकाः, हूणाः कुषाणाश्च आगताः तेषां संस्कृतयश्च व्यलीयन्त भारतीय संस्कृतौ । सदैव भारतीयाः संस्कृतिरपि अन्य संस्कृतीनां उदात्तभावान् गृहीतवती । उदारतयैव सहिष्णुताया अहिंसायाश्च तत्त्वं भारतीय संस्कृतौ समाविष्टम् ।

**(इ) त्यागसंयमसन्तोषादिगुणाः—**

भारते त्यागिनः तपस्विनश्च सदा पूज्या आसन् । ब्रह्मचर्याश्रमे वानप्रस्थेसंन्यासाश्रमे तु एतेषां गुणानां अभ्यासः अभवदेव, गृहस्थेऽपि त्यागाय एव सञ्चयः क्रियते स्म । संन्यासे तु सर्वस्वत्यागस्यैव विधानम् 'सन्तोष एव पुरुषस्य परं विधानम्' इत्येव भारतीयानां मान्यता । वस्तुतस्तु नैमान् विना जीवनं सुखशान्तिपूर्णं स्यात् ।

**(ई) अन्याः विशेषताः—**

गुरुजनानामतिथ्यादीनां च देववत्पूजाकरणम्, कृतज्ञता, वीरपूजादीनि च अन्यान्यपि तत्त्वानि खलु भारतीयसंस्कृतेः ।

वस्तुतस्तु एभिरेव तत्त्वैः भारतीयसंस्कृतेः प्राणशक्तिरप्रतिमा जाता यया साऽधुनाऽपि सम्पूर्णदेशं एकताया सूत्रे बध्नाति, विश्वसंस्कृतीनां च सम्मुखं गौरवोन्नता तिष्ठिति ।

## ६१. राष्ट्रभाषा–संस्कृतम्

राष्ट्रस्य भाषा राष्ट्रभाषा कथ्यते । परमत्रायं प्रश्नः समुपस्थितो भवति यत्का भाषा राष्ट्रभाषा भवितुमर्हतीति । अस्मिन्विषये इदं कथयितुं शक्यते यत् राष्ट्रस्य सैव भाषा राष्ट्रभाषा भवितुं प्रभवति यस्याः व्याकरणं वैज्ञानिकं सुसम्बद्धं सुदृढञ्च स्यात्, यस्यां शब्दाः प्रचुराः स्युरर्थात् शब्दकोषः महान् स्यात्, यस्याः साहित्यं सुललितं सुविपुलं जीवनाय प्रेरणाप्रदायकं राष्ट्रियभावनयोतप्रोतं स्यात्, यस्याः भाषायाः साहित्ये जीवनोपयोगिनां वस्तूनां धमार्थकामोक्षाणां प्राप्तेरूपायानां सम्यग् वर्णनं स्यात्, अपि च या भाषा अनेक जात्युपजातिसंभवानपि जनान् एकतासूत्रे बद्धु प्रभवेत्, यस्यां च विविधविषयाणां ज्ञानं निहितं स्यात् सैव लोकप्राणप्रदायिका भाषा राष्ट्रभाषा भवेत् ।

उपर्युक्तदृष्ट्याऽवलोकनेन भारतस्य कोप्यन्या भाषा नास्ति या राष्ट्रभाषापदमलङ्कर्तुं समर्था स्यात्-केवलं संस्कृतभाषैव स्वालौकिकगुणैः राष्ट्रभाषाभवितुमर्हति । यतो हि संस्कृते विविधविद्याज्ञानविज्ञानानां निधयश्चत्वारो वेदाः समुल्लसन्ति ये वेदाः विश्वसाहित्यस्याऽऽधारभूता सन्ति । वेदानामपि षडङ्गानि सन्ति । संहिताब्राह्मणारण्यकोपनिषदादयो ग्रन्थाश्च संस्कृतस्य गौरवभूताः जीवनक्षेत्रे पदे पदे प्रेरणाप्रदायकाः सन्ति । आत्मसम्बन्धिविवेचनन्तु यथा संस्कृते प्राप्यते तथा विश्वस्य कस्यामपि भाषायाम् न प्राप्यते । संस्कृते षण्णां दर्शनशास्त्राणां वर्णनमवलोक्य पाश्चात्याः भृश विस्मिताः संजायन्ते तथा संस्कृतं समादरदृष्ट्याऽवलोकयन्ति सत्कुर्वन्ति च ।

लौकिकसाहित्ये तु जीवनोपयोगिनां वस्तूनां, कर्तव्याकर्तव्ययोश्च धर्मार्थकाममोक्षाणां विस्तारेण वर्णनं प्राप्यते । चेद् वय रामादिवद्

व्यवहरामस्तदा राम इव वयमपि धन्याः मान्या स्मरणीयाश्च भविष्यामः। चेद् वयं रावणकंसजरासन्ध दुर्योधनादय इव व्यवहरिष्यामस्तदा रावणादीनामिवाऽस्माकं कोऽपि नामानि अपि न स्मरिष्यति। अतः संस्कृतसाहित्यमस्मभ्यं शिक्षां ददाति। यत् रामादिवत् व्यवहरेयुः नतु रावणादिवदिति।

देशस्य शासको राम इव धीरो वीरः गम्भीरः प्रजावत्सल कोमलहृदयः महासत्वोत्साहसम्पन्नः लोकप्रियः स्यात्। पिता दशरथ इव स्यात् मातरः कौशल्यासुमित्रादय इव स्युः। भ्रातरः भरतलक्ष्मणशत्रुघ्नसमाः स्युः। सेवकाः पवनपुत्राङ्गदादय इव स्युः। सखायश्च विभीषणसुग्रीवादय इव भवेयुः। नार्यश्च सीतासावित्रीसमाः चरित्रवत्यः स्युः। रामराज्यमिव सर्वत्र सुखशान्ती समृद्धिश्च भवेयुरिति सर्वाऽपि शिक्षा वाल्मीकिविरचिताद्रामायणात्प्राप्यते। चेद्दुर्योधन इव व्यवहरिष्यति तदाऽचिरेण नाशमेष्यति। अतः युधिष्ठिर इव व्यवहरंल्लोके यशः शरीरेणाऽमरः भविष्यसि इति सर्वं रामायणं महाभारतमिति काव्यद्वयमेवाऽस्मान् शिक्षायितुमलमस्ति। लोके सर्वत्र चरित्रहीनता अनुशासनहीनताऽराजकता, स्वेच्छाचारिता, नास्तिकता, उद्दण्डता, वञ्चकता, स्वार्थान्धिता चरमसीमानमतिक्रम्य विराजते। एतादृशीं दुरवस्थां दूरीकर्तुं सर्वानपि देहिनः एकतासूत्र बद्धुं संस्कृतभाषैव शक्ताऽस्ति। अस्या एवं सर्वश्रेष्ठंवैज्ञानिकं व्याकरणं, विपुलं च साहित्यं राष्ट्रीयभावनया समन्वितमस्ति यत् धर्मार्थकाममोक्षादीन् चतुरः पदार्थानपि दातुं समर्थामस्ति। संस्कृतसाहित्यमस्मान् पदे पदे प्रेरयति, उत्साहयति, उद्विग्नतां दूरीकरोति, सन्मार्गे प्रेरयति योजयति च। देशे दिवानिशं वर्धमानां चरित्रहीनतां दूरीकृत्य जनान् सच्चरित्रान् कर्तुं संस्कृतमेव प्रभवति। एतादृशीं विपुलसाहित्यज्ञानानि दधानां संस्कृतभाषां विहाय काऽन्या भाषा राष्ट्रभाषापदमधिरोढुं प्रभवेत्। केवलमेका संस्कृतभाषा भारतस्य राष्ट्रभाषा भवितुमर्हति।

संप्रति देशे सर्वत्रापि अराजकतामयमुद्दण्डतामयमनुशासनहीनतामयं स्वार्थमयं सच्चरित्रहीनतामयं च यद् वातावरणं संदृश्यते एतत्सर्वं संस्कृत-

भाषा दूरीकर्तुं शक्ताऽस्ति । चेत् संस्कृतभाषा राष्ट्रभाषा स्यात् तदा पुनरपि रामराज्यमिव सुखशान्ती, न्यायः, समृद्धिः, सच्चरित्रतोदारता, महनीयता, पूजनीयानामादरः, सत्यता, आस्तिकता, श्रद्धा-भक्तिः, सहकारिता साहचर्यभावना, ऐक्यभावना, देशभक्तिः, राष्ट्रभक्तिः, गुणानामादरः, मिथ्याऽहंकारदम्भपाखण्डादीनां मात्सर्येर्ष्याऽपमाननिन्दाचौर्यक्रौर्यदस्युवृत्तीनामपि विनाशः प्रभवेत् ।

एतादृशी प्राणभूता प्रचुरशब्दकोषसमन्विता देवभाषा संस्कृतमेव राष्ट्रभाषा भवितुमर्हतीति न काचिदन्येति भावः । एतैर्गुणैरेव इयं भाषा देवभाषा, सुरभारती, गीर्वाणवाक्, गीर्वाणवाणी, ब्राह्मी, भारती सरस्वतीति नामभिः व्यवह्रियते, संबोध्यते, सक्रियते, पूज्यते च । तथा च केनाप्युक्तमस्ति—

**भारते भारती भाषा भव्यभावसमन्विता ।**
**संस्कृतैर्धार्यते यस्मात्तस्मात्संस्कृतमुच्यते ।।**

अतः संस्कृतभाषैवाऽस्मान् त्रातुं प्रेरयितुं, सच्चरित्रवतः कर्तुं प्रभवेत् । सैव च राष्ट्रभाषापदमलङ्कर्तुं पूर्णरूपेण समर्थाऽस्ति न काचिदन्या भारतीयभाषेति । राष्ट्रभाषामभिलक्ष्य ये विवादाः विभिन्नप्रदेशेषु समुद्भवन्ति तेऽपि राष्ट्रभाषापदमारूढया संस्कृतभाषया विलीनतां यास्यन्ति, सद्भावना चैक्यभावना च सर्वेषां हृदि सुतरां स्थानं ग्रहीष्यतीति नात्र संशयो विधेयः केनाऽपि ।

## ६२. अखण्डं भारत राष्ट्रम्

परिवर्तनशीलमिदं जगद् । यदद्य विद्यते, तत् श्वो न । परिवर्तनस्य लहरीषु मनुष्याः परिवर्तन्ते, किञ्च अचेतनाः गिरिनद्यः अपि परिवर्तन्ते । परिवर्तनस्य इमामेव निष्ठुरतां प्रेक्ष्यं उक्तं केनचित् कविना—'अहे—निष्ठुर परिवर्तन । वासुकि सहस्रफण ।' अस्माकं गौरवान्वितो भारतदेशोऽपि कालवशात् परिवर्तनं प्राप्य खण्डितोऽभवत् ।

अखण्डस्य भारतराष्ट्रस्य वैभवं कः खलु वर्णयितुं समर्थः? राम-कृष्णबुद्धमहावीरतुल्याः महात्मानः, चन्द्रगुप्तविक्रमादित्यशिववीरसमाः राजानः, व्यासवाल्मीकिकालीदासः समाः कवयश्च अस्मिन्नेव देशे जन्म प्राप्तवन्तः। देशोऽयं सर्वदेशानां गुरुरासीत्। यदा संसारस्य अन्ये देशाः असभ्याः अर्धसभ्याः वा आसन् तदा सभ्यतायाः उच्चशिखरारूढोऽस्माकं देशः वैदेशिकानपि शिक्षां ददाति स्म --

**एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।**
**स्वं-स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः॥**

(मनु)

मध्यकाले तु देशोऽयं परतन्त्रो जातः, क्रमशः खण्डितश्चाभूत्। श्यामब्रह्मदेशलङ्कादयश्च अस्मात् पृथक्जाताः। १९४७ तमे ईसवीये वर्षे तु स्वाधीनताप्राप्ति समकालमेव अस्य विस्तृतो भूभागः पाकिस्तान-नाम्ना पृथक् राष्ट्रं जातम्।

अखण्डस्य यस्य भारतराष्ट्रस्य उत्तरस्यां दिशि नगाधिराजः हिमालयः पश्चिमे च दिग्भागे विस्तृतः सागरः प्रहरिरूपेण आस्ताम्, तस्य राष्ट्रस्य विभाजनानन्तरं साम्प्रतं सीमासुरक्षायाः समस्या अतीव जटिला वर्तते। वस्तुतस्तु यदा भारतपाकिस्तानयोः संयुक्ता सुरक्षाव्यवस्था भविष्यति तदैव सम्पूर्णस्य उपमहाद्वीपस्य सुरक्षा कर्तुं शक्यते। अनेनैव कारणेन बहवो राजनीतिज्ञाः अधुनाऽपि अखण्डभारतराष्ट्रस्य आवश्यकता-मनुभवन्ति, प्रयतन्ते च उभयोः राष्ट्रयोरेकतायै। ●

## ६३. समाजसेवा

संसारेऽस्मिन् यः कोऽपि जन्म गृह्णाति स एक एव समुद्भवति। पुराऽपि सर्वप्रथममेक एव प्राचीनपुरुषो विष्णुरजायत ततो ब्रह्मादयोऽजायन्त। क्रमशः सृष्टिरियं वृद्धिं गता। शिष्टानां सभ्यानां जनानां समूहः समाजः कथ्यते। समाजस्य सेवा समाजसेवा भवति। व्यक्तिः समाजस्यैकमङ्गमस्ति। मानवरूपाणामङ्गानां समुदायः समाजोऽभिधीयते।

यादृशाः यस्य समाजस्य व्यक्तयः भविष्यन्ति स समजोऽपि तथैव भविष्यति । यथा च समाजो भवति तथैव व्यक्तयो भविष्यन्ति ।

अर्थात् व्यक्तीनां प्रभावः समाजे निपतति समाजस्य च प्रभावः व्यक्तिषु निपतति । परं कोऽपि असाधारणः लोकोपकारभावनया समन्वितः पुरुष एव समाजस्योन्नयनकारणं भवति । यथा च श्रीरामचन्द्रः स्वप्रजानुरागेण शौर्येणौदार्येण, सच्चारित्र्यबलेन, आदर्शगुणैः, वानरान्, राक्षसान्, वन्यान्, ऋक्षांश्च विनीतान् अकरोत् तथा च स्वशासननैपुण्यमदर्शयत् यथाऽद्यापि रामराज्यस्य नाम श्रुत्वा सुखशान्ती ममनुभवन्ति। रामः यथा समाजसेवक आसीत्तथा नेतारः समाजसेवका स्युरिति। समाजसेवाभावस्तु परोपकारस्यैकं महत्वपूर्णमङ्गमस्ति । ये उदारहृदयाः भवन्ति तेषां कृते कोऽपि भेदभावो न भवति । सर्वेषां प्राणिनामपि दुःखमार्तिं विपत्तिं च स्वदुःखं स्वाऽऽर्तिं स्वविपत्तिं च मत्वा तेषां साहाय्यकरणमेव समाजसेवाऽस्ति ।

समाजसेवायाअनेके प्रकाराः भवन्ति । यः समाजोऽशिक्षितोऽस्ति अथवा समाजस्य यः कश्चित् शिक्षितो नास्ति तस्मै शिक्षादानं समाजसेवा । यः कश्चिद्रोगी वर्तते तस्मै चिकित्सायाः प्राप्त्यै समुचितस्थाननिर्देशनं योग्यचिकित्सकस्य समीपनयनं, यथाशक्ति तस्मै धनदानमपि समाजसेवा कथ्यते । समाजे यः कश्चिद् भ्रष्टाचारी, भ्रष्टाधिकारी, उत्कोचकोप्यस्ति तस्मात् समाजस्य रक्षाकरणं समाजसेवा, येषां छात्राणां धनाभावाद्विद्यालये प्रवेशः न भवति तेषां धनदानेन विद्यालयेषु प्रवेशकरणं समाजसेवा । यस्मिन् विद्यालये क्षात्रेभ्यः समुपवेशनाय समुचितस्थानं समुचितक्रीडास्थानम् अथवा समुचिताध्यापनव्यवस्था च नास्ति तत्र समुचितव्यवस्थाकरणं, यथाशक्ति धनदानमपि समाजसेवा कथ्यते।

यस्मिन् ग्रामे, नगरे, वा मार्गाणामुचितप्रबन्धो नास्ति तत्र यातायातयोः मार्गाणां समुचितप्रबन्धकरणमप्यथवासहयोगदानं, प्रेरणादानं जानानामुत्साहवर्धनमपि समाजसेवा अस्ति । मूकानां, बोलानां, विकलाङ्गानामपि साहाय्यकरणं, धनिकेभ्यो व्यापारबुद्धिप्रदानं, कृषकेभ्यः समु-

चितपरामर्शप्रदानं, उत्तमबीजादीनां कृषकेभ्यः प्रापणं तेभ्यः न्यायप्रापणं चिकित्साप्रापणं, शिक्षादानं मार्गाणां, गृहाणां, स्वच्छतायै प्रेरणं, 'शिक्षणं च समाजसेवा अस्ति' ग्रामे, ग्रामे, नगरे नगरे, स्थाने, स्थाने च समाजसेविनां संस्थाः स्थापनीयाः । याः संस्थाः जनान् सन्मार्गोपदेशं ददानाः सर्वेषां समुचितं यथाशक्ति सेवां कृत्वा देशोन्नयने समाजोन्नयने देशभक्तेः राष्ट्रभक्तेश्च भावानां शिक्षणं ददति तासां सेवाऽपि समाजसेवा कथ्यते ।

यस्मिन् देशे एतादृश्यः संस्थाः, एतादृशाः समाजसेवकाः सन्ति स देशः महतीं प्रतिष्ठामुन्नतिं च दधानः संसारे महान् कीर्तिभाग्भवति । तत्रैव च स्वर्गोऽधितिष्ठति । तत्रैव सुखशान्ती, समृद्धिः तथा सार्वभौमिको विकासोभवति ।

यत्र च समाजसेवकानामभावः स्वार्थपरायणानां बाहुल्यं भवति तस्मिन्देशेऽसन्तोषोऽव्यवस्थाऽराजकताऽनुशासनहीनतोद्दण्डता, क्षुद्रभावानां बाहुल्यं, प्रजासु हाहाकारः, दैनिकोपभोग्यवस्तूनामभावोभवति यथा च सम्प्रति भारते देशे, वनस्पतिघृतस्य, तैलानां; शर्कराद्दिदैनिकव्यवहार्याणामावश्यकानां वस्तूनामभावः वर्तते । यद्यपि न्यूनता कस्यापि वस्तुनः नास्ति, परं स्वार्थभावना, संग्रहभावना चरमसीमानमतिक्रम्य वर्तते । चेत् सेवाभावः धनिकेषु, व्यापारिषु, संग्रहकर्तृषु जागृयात् तदाऽस्माकं देशे कस्यापि वस्तुनोऽभावो न संपत्स्यते । समाजसेवा एकं महत्कर्मास्ति येन सर्वारपि विषमताः, सर्वोऽपि-असन्तोषः, सर्वाऽप्यशान्तिः, सर्वाण्यपि दुःखानि, सर्वाऽपि दुरावस्था क्रमशः समतासन्तोषशान्तिसुव्यवस्थासु परिणताः भविष्यन्ति । सैवायै महान् त्यागोऽपेक्ष्यते । भगवता रामेण जनसेवायै सगर्भा प्राणेभ्योऽपि गरीयसी सीतापि त्यक्ता । पर प्रजाना सेवायां न किमपि व्यवधान सेहे । बुद्धोऽपि जनसेवायै बौद्धधर्मस्य प्रचारमकरोत् । शिववीरराणाप्रतापतिलकमालवीयगान्धिजवाहरलालबहादुरशास्त्रिप्रभृतयः महान्तः देशसेवकाः समाजसेवका अभूवन् ।

एतादृशा एव सेवकाः यस्मिन् देशे तथा समाजे विद्यन्ते तस्मिन् देशे न किमपि वैषम्यं न कापि कटुता भवति । अपि तु सर्वेषामपिसमृद्धि-

सुखशान्तिस्नेहादीनां बाहुल्यं भवति । परम् सेवाभावः परमकठिनोऽस्ति। अस्मै सर्वमपि समर्पणं कृत्वा विश्वमेव स्वपरिवारगणनं विश्वस्य सुखानि दुःखानि स्वसुखानि स्वदुःखानि च स्वीकृत्य व्यवहरणेनैव सेवाभावः यथार्थरूपेणः फलवान् भवति । सर्वेऽपि देशसेविनः, समाजसेविनः, देश-भक्ताः राष्ट्रभक्ताश्च भवेयुरिति भगवन्तं शिवं प्रार्थयामहे ।

## ६४. न रत्नमन्विष्यति मृग्यते हि तत्

विचित्रेऽस्मिन्संसारे द्विविधं वस्तु संदृश्यते सारमयमसारमयं च । सारमयानि वस्तून्येव रत्नशब्देन व्यवह्रियन्ते । जनैः रत्नानि अन्विष्यन्ते । रत्नन्तु न कमपि समन्विष्यति । अपि तु रत्नमेव अन्विष्यते अमुमेवाशयं दर्शयता कविकुलगुरुणा कालिदासेन कुमारसम्भवस्य पञ्चमे सर्गे व्यलेखि यत्—

'न रत्नमन्विष्यति मृग्यते हि तत् ।"

यदा पार्वती मदनदहनानन्तरं दुष्करं महत्तपस्तेपे तदा तत्तपोऽव-लोक्य भगवान् आशुतोषः ब्रह्मचारिवेषं स्वीकृत्य पार्वत्याः स्नेहस्य परी-क्षणाय पार्वतीमुपागच्छत् । पार्वतीं तपश्चरणहेतुं पृच्छन्नाह यत् हे— बालमृगाक्षि ? दुष्करमिदं तपः किमर्थं क्रियते यतोहि यदर्थं तपः क्रियते तत्सर्वमैश्वर्यादिकं तव पितुः पार्श्वे विद्यत एव । चेद् योग्यवरलाभायेदं तपः क्रियते तदपि व्यर्थमेवास्ति । यतश्च भवादृशी अप्रतिमलावण्योद्-गमस्थानं या रमणी भवति सा स्वयं वरप्राप्तये न यततेऽपि तु तत्सौन्दर्य-गुणग्राहिणः युवान एव परमसुन्दरीः अन्वेषयन्ति । अतः तवाभीष्टो वरः स्वयमेव त्वामुपेत्य तव दासो भूत्वा भवतीमनुचरिष्यति । इत्थं विचार्य-माणेन एतत्सिद्ध्यति यत् याः परमसुन्दर्यः गुणवत्यः शीलौदार्यमार्दवादि-गुणगणविभूषिताः भवन्ति ताः स्वयं वरान् नान्वेषयन्ति अपि तु गुण-ग्राहिणः वरा एव ताः समुमेत्य सादरमनुनीय संगृह्य च स्वजीवनं सफल-यन्ति । अतः तवेप्सितो वरः स्वयमेव त्वामुपेत्य ग्रहीष्यति, तत्प्राप्त्यै त्वया न कोऽपि यत्नो विधेयः यतश्च रत्नानि जनै अन्विष्यन्तेऽपि तु

रत्नानि न कमपि अन्विष्यन्ति। यथाहि कालिदासः ब्रह्मचारिवेषधारिण-शिवस्य मुखेनावर्णयत् यत्—

दिवं यदि प्रार्थयसे वृथा श्रमः, पितुः प्रदेशास्तव देवभूमयः।
अथोपयन्तारमलं समाधिना, न रत्नमन्विष्यसि मृग्यते तत्॥

अपि च—

निवेदितं निश्वसितेन सोष्मणा, मनस्तु मे संशयमेव गाहते।
न दृश्यते प्रार्थयितव्य एव ते, भविष्यति प्रार्थितदुर्लभः कथम्॥

अयमाशयः हे पार्वति ! यदि तव तपश्चरणहेतुः वरप्राप्तिरेवास्ति तदपि न समीचीनमस्ति यतः त्रिभुवनेऽस्मिन् कोऽपि तादृशः युवा न दृश्यते यं भवती कामयेत्. सः दुर्लभः स्यादतस्तप करणं निष्प्रयोजनमेव मे प्रतिभाति। यतश्च तव पार्श्वे विनयार्जवशीलसौन्दर्याद्यसाधारण गुणगणः विद्यतेऽतः त्वया वरलाभाय न कोऽपि प्रयासो विधेयः स एव त्वाम् अनुनेष्यतीति।

यथा ब्रह्मचारिवेषधारी शिवः पार्वतीमकथयत्तथैव दुष्यन्तोऽभिज्ञान-शाकुन्तले शकुन्तामधिकृत्याब्रवीत् यत—

लभेत वा प्रार्थयिता न वा श्रियं।
श्रियः दुरापः क मीप्सितो भवेत्॥

अतोऽसाधारणया परमसुन्दर्या तन्वङ्ग्या प्रार्थितः मनुष्यः तस्याः पाणिं कथं न ग्रहीष्यति अपि तु सहर्षं ग्रहीष्यति इति हेतोः हे पार्वति ! तवेदं दुष्करं तपः व्यर्थमेव पश्यामि।

लोकेव्यवहारेऽपि दृश्यते यत् रत्नानि अर्थात् श्रेष्ठपुरुषाः गुणिनः कलाविशारदाः विद्वांसः गुणग्राहकैः अन्विष्यन्ते। तथैव लावण्योपासकैः नवयुवकैः सुन्दर्यः अन्विष्यन्तेऽतः सुन्दरीभिः वरलाभाय न कोऽपि यत्नः कार्यः। परमसुन्दरीं सीतां प्राप्तुमनेकराजानः मिथिलामागच्छन् रामोऽपि तत्र प्राप्य धनुर्भङ्गं कृत्वा सीतामगृहीत्। दमयन्तीं विदर्भपुत्रीं प्राप्तुं नलः स्वयमुपेत्य ताम् प्रणयिनीमकरोत्। लौकिकोदाहरणैरपि एतज्ज्ञायते-यत्-सुन्दरीभिः प्रार्थिता जनाः दुर्लभा न भवन्ति अपि तु स्वयमेव दासतामायान्ति।

उपर्युक्तविवेचनेन एतत् सुतरां सिद्धमस्ति यत् रत्नानि अर्थात् रत्नभूता श्रेष्ठाः गुणिनः कलाविशारदाः जनाः न कमपि अन्वेषयन्ति । अपि तु गुणवतां जनानां चरणेषु गुणग्राहकाः निपतन्ति सर्वस्वमपि परित्यज्य तेषां गुणिनामेव दासाः भवन्ति । अतः गुणिनः न कदापि धर्यं परित्यजेयुरिति । गुणग्राहकैः एव स्वयम् गुणिनः अन्विष्यन्ते ।

अतः हे पार्वति ! दुष्करमिदं तपः परित्यज्य गृहं व्रज, यत्र तवहृदयवल्लभः स्वयमेव आगत्य त्वाम् सेविष्यते । नात्र संशीतिः । अत्र कालिदासस्योपर्युक्तकथा तु अनुभवसिद्धमस्ति सत्यं समीचीनं चास्ति ।

## ६५. भारतीयकृषकाः

संसारेऽस्मिन् सर्वमपि अत्याश्चर्थकरमस्ति । प्रायेण मनुष्याः ग्रामेषु नगरेषु च निवसन्ति । नगरेषु व्यापारिणः श्रेष्ठिन राजकर्मचारिणोऽधिकारिणश्च निवसन्ति तथा कर्मकरा साधारणाअसाधारणाश्च जना निवसन्ति । ग्रामेषु प्रायेण कृषका एव निवसन्ति । ते कृषिकम कुर्वन्ति । प्रचुरमात्रमन्नोत्पादनं महता परिश्रमेण कुर्वन्ति ।

कृषकाः प्रातरुत्थाय हलमादाय वृषभाणां स्कन्धेषु निधाय क्षेत्राणि गत्वा कर्षन्ति । क्षेत्राणि कृष्ट्वा समतलानि च विधाय यथासमयं अन्नवीजानि वपन्ति । समयेसिञ्चन्ति, रक्षन्ति च । यदा शस्यानि पच्यन्ते तदा सोल्लासं शस्यकर्तनं कृत्वाऽन्नं च पृथक्कृत्य स्वगृहं नयन्ति । एते कृषकाः वर्षासु, सूर्यातपे, शिशिरे च समानरूपेण महता परिश्रमेण कृषिकर्म कुर्वाणाः अन्नमुत्पाद्य नागरिकान् पालयति । अर्थात् नागरिकेभ्योऽन्नं ददति । स्वयं च कदन्नानि भुञ्जते परं नागरिकेभ्यः पुष्टान्यन्नानि ददति ।

एते कृषकाः सदा मेघाभिमुखमेवाऽवलोकयन्तः स्वजीवनं यापयन्ति-यत् कदा जलं पातपिष्यति । तेषां कृषकाणां येऽभीष्टदेवा सन्ति तेषु प्रथमस्तावन्मेघः द्वितीयस्तु वृषभाः, तृतीयस्तु क्षेत्राणि, क्षेत्रकर्षणस्य

साधनानि च सन्ति। एतेषां धनं, मानं, बलं सर्वस्वमपि कृषिकर्म एवास्ति। कृषिकर्म कुर्वन्तः परिश्रमाग्नौ स्वशरीररक्तमांसादिकं जुह्वति। नैते विश्रामं कुर्वन्ति, न च परिश्रमाद् बिभ्यति। सदा समानरूपेण कृषिकरणे एव आनन्दमनुभवन्ति, स्वान् धन्यांश्च मन्यन्ते। कृषकाणां स्त्रियः बालाश्च सर्वेऽपि महता परिश्रमेण कृषिकर्मकरणे साहाय्यं कुर्वन्ति कृषिकर्मकृत्वैव च स्वपरिश्रमं सफलीकुर्वन्ति।

परमेते कृषकाः यादृशं दुष्करं श्रमं कुर्वन्ति तादृशं फलमानन्दं सुखं च न लभन्ते। यतो हि तेषां पार्श्वे कृषिकर्मसाधनानि-आधुनिककृषि-यन्त्राणि समुन्नतबीजानि च न सन्ति। सेचनस्य नास्ति समुचितः प्रबन्धः। सेचनाभावे ते यथेष्टमन्नमुत्पादायितुं न क्षमन्ते च तेभ्यः कृषेः पूर्णलाभश्च न मिलति। यदा तेषां पार्श्वेऽन्नं भवति तदा अपि व्यापारिणोऽल्पमूल्येन तेभ्योऽन्नं क्रीणन्ति कालानन्तरं च व्यापारिणः द्विगुणं। मूल्यवृद्धिं कृत्वाऽन्नं विक्रीणन्ति। कृषेर्वास्तविकं लाभं व्यापारिण एव प्राप्नुवन्ति न तु कृषकाः। इति हेतोः कृषकास्तु निर्धना एव तिष्ठन्ति परमन्नविक्रेतारो व्यापारिणोऽचिरेणैव धनिनः श्रेष्ठिनश्च संपद्यन्ते।

कृषकाणामिदं दौर्भाग्यमस्ति यत्तेभ्यः समुचितं मूल्यं तेषामन्नानां न प्राप्यते। शासनमपि तेषां वास्तविकीषु दशासु समुचितं ध्यानं न ददाति। येन तेभ्यः यथायोग्यं मूल्यं प्राप्नुयात्। कृषकाः प्रायेणाऽशिक्षिता एव भवन्ति। शिक्षाऽभावादेते मिथः सततं कलहायन्ते। येन तेषां लाभस्य विकासस्य च भागं विधिज्ञाः (वावकीलाः) एवापहरन्ति। कदाचित् रक्षापुरुषा (राजपुरुषा कोतवालादयः) एव तान् मिथ्याऽभियोगेन बद्ध्वो-त्कोचं गृहीत्वा परित्यजन्ति। अनेन प्रकारेण शिक्षाऽभावात्कृषका लुण्ठ्-यन्ते। एकतस्तु ते स्वकृषेः यथोचितं लाभं नाप्नुवन्ति। अन्यतस्तु शासननियुक्तैः पुरुषैश्च तथा सन्ताप्यन्ते यथा ते उत्कोचादिकमधिका-रिभ्यः यच्छेयुः।

एतादृशीं कृषकाणां दयनीयां दशां दर्शं दर्शं कस्य मनसि कारुण्यं नोपजायते। अपितु सर्वेषामपि चित्तेषु कारुण्यमुत्पत्स्यते। वस्तुतः लोक-

पालकानामन्नदायकानां कृषकाणां दशासु न कोऽपि दयां कुरुतेऽपि तु लोकरक्षकान् कृषकानपमानेन पश्यन्ति जनाः। यद्यपि कृषका एव भगवन्तः, साधवः, महर्षयः, धर्मात्मानश्च सन्ति एते एव भूस्वामिनः तपस्विनः परोपकारिणश्च शूराः देशभक्ताः सन्ति। ये स्वयमन्नमुत्पाद्य सर्वेषामपि प्राणान् रक्षन्ति अन्नप्रदानेन। एतेषां तपोभूमिस्तु क्षेत्राण्येव अस्ति।

यस्मिन्देशे तपस्विरूपाणां महर्षीणां, कृषकाणामुचितः समादरो भवति स एव देशः यथेष्टामुन्नतिं गौरवं सम्पन्नतां चाधिगच्छति। कृषिप्रधानेऽस्माकं भारतवर्षे कृषकाणां यथेष्टं मानं तेभ्योऽन्नस्य यथोचितः लाभः मिलेत्। येन ते सोत्साहाः सन्तः महतोत्साहेन प्रचुरमन्नमुत्पाद्य देशस्य समृद्धौ सहकारिणः स्युः। अतः कृषकाणां यथेष्टकृषिसाधनानि, सेचनाय जलानि, ववपनाय बीजानि मिलेयुः। येन देशः वास्तविकीमुन्नतिं लब्धुं शक्ष्यति। ०

## ६६. नारी शिक्षा

स्त्री-पुरुषौ समाजरथस्य द्वे चक्रेस्तः। यदा अनयोः एकमपि अविकसितं अल्पविकसितं वा भवति तदा समाजस्य विकासे महान् व्यतिक्रमो जायते। व्यक्तेः मस्तिष्कस्य आन्तरिकसत्प्रवृत्तीनां च विकासस्य सर्वप्रमुखं साधनं शिक्षा एव। एतदर्थं नारीजनानामुन्नतिकरणाय नारीशिक्षायाः अपि पुरुषशिक्षावत् महती आवश्यकता वर्तते।

प्राचीनभारते जनानां मान्यता आसीत् यत् 'यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः' (मनु) इति। तदा नार्यः सुशिक्षिताः आसत। विदुषी गार्गी महर्षिणा याज्ञवल्क्येन सह नितान्तं गूढविषयमाश्रित्य शास्त्रार्थं कृतवती, इति कस्य न श्रुतिविषयमापतितं स्यात्? याज्ञवल्क्यस्य ज्ञानमण्डितायाः धर्मपत्न्याः मैत्रेय्याः मण्डनमिश्रस्य प्रतिभासम्पन्नाया अर्धाङ्गिन्याः भारत्या वा नाम केन नाकर्णितम्? अनेन ज्ञायते यत् प्राचीनभारते नारीशिक्षाया सम्यग् व्यवस्था आसीत्। यच्च 'स्त्रीशूद्रौ

नाधीयाताम्' इति प्रचलितं तत् तु मध्यकाले समुत्पन्नानां पतनोन्मुख-प्रवृत्तीनामेव चिह्नम् ।

कस्यचिदपि राष्ट्रस्य महत्ता नारीशिक्षामेव अपेक्षते—यतः नार्यः समुन्नतस्य राष्ट्रस्य आधारशिलाः भवन्ति । अद्य विद्यालयेषु या बालिकाः पठन्ति, ता एव श्वो मातरो भवन्ति । माता एव राष्ट्रनिर्मातृणां राज-नीतिज्ञानां कवीनां वैज्ञानिकानां च निर्मात्री खलु । सा बालकस्य प्रथमा शिक्षिका । अत एवोक्तं शतपथब्राह्मणे—'मातृमान् पितृमानाचार्यवान् पुरुषो वेद' इति बालकः जनन्याः अङ्के जीवनस्यानुत्तमं पाठं गृह्णाति । सुशिक्षिताः गौरवशालिन्यो मातरः सर्वथा योग्यानेव पुत्रान् जनयन्ति । शिक्षां प्राप्य नार्यः गृह-प्रबन्धे दक्षतां प्राप्नुवन्ति । किञ्च सुशिक्षिताः एव नार्य समानाधिकारस्य युगेऽस्मिन् राजनीतौ, राजकीयसेवासु, अन्य-क्षेत्रेषु वा यथेच्छं साफल्येन कर्म कर्त्तुं समर्था भवन्ति ।

बालकबालिकानां सहशिक्षा स्यात् पृथक् रूपेण वा, वैमत्यं खल्व-स्मिन् विषये । सहशिक्षायां तु चारित्रिकदोषाणां सम्भावना भवत्येव । किशोरावस्थायां तु अविकसितविवेकत्वात् किशोरकिशोरीणां सहाध्ययने दोषोत्पत्तिरेव सम्भाव्यते । वयस्कास्तु छात्रछात्राः स्वहिताहिते जानन्ति । अतः विंशतिवर्षतः प्राधिकावस्थानां छात्रछात्राणां सहशिक्षायां तु न विशेषो दोषः ।

स्वतन्त्रताप्राप्त्यनन्तरं तु राष्ट्रिय शासनं नारीशिक्षायाः महत्त्वं सम्यगनुभवति । प्रतिदिनं शिक्षायाः प्रसारो दृश्यते । मध्यकालस्य अवगुण्ठनवत्यः अशिक्षिताः नार्यः सम्प्रति यतेच्छं शिक्षां प्राप्य सक्रिय-राजनीतौ, प्रशासकीयपदेषुः अन्येषु च विविधेषु क्षेत्रेषु प्रतिष्ठिताः सन्ति । सम्प्रति तु आवश्यकमिदं यत् ग्रामीणक्षेत्रेष्वपि सर्वत्र स्त्री-शिक्षायाः व्यवस्था भवेत् । यतः ग्रामेष्वेव देशस्य बहुसंख्यिका जनता वसति । तदैव स्त्री-शिक्षाया योजनाः पूर्णाः भविष्यन्ति ।

## ६७. विंशतिसूत्रीयः कार्यक्रमः

आपातस्थितेर्घोषणानन्तरं देशस्यार्थिकोन्नतये प्रधानमंत्रिणा १-७-७५ तारिकायां यो विंशतिसूत्रीयः कार्यक्रमो घोषितः स संक्षेपेण वर्ण्यते:—

(१) परमावश्यकवस्तूनां मूल्यापचयाय प्रयत्नस्य नैरन्तर्य्यं, तेषां वस्तूनां प्राचुर्येणोत्पादनं, उत्पादकेभ्यो ग्रहणं, उपभोक्तृभ्यो वितरणम् प्राशासनिकव्ययेषु भूयानपचयश्च ।

(२) कृषियोग्यभूमेरधिकतमां सीमां निर्धार्यविशिष्टायाश्च भूमेः भूहीनेषु लोकेषु यथाशीघ्रं समानतया वितरणम् ।

(३) आवासहीनेभ्यो निम्नवर्गीयेभ्य आवासभूमेः प्रतिदानम् ।

(४) प्रतिबद्धश्रमिकत्वस्य यत्र कुत्रापि स्थितस्य अवैधता घोषणम् ।

(५) लघुकृषकाणां निर्धनग्रामीणानां भूहीनश्रमिकाणञ्च ऋणाद्विमोचनं, नूतनैः विधेयकैश्च न्यायालयेषु तेषामभियोगानां स्थगनम् ।

(६) कृषिसम्बन्धिपारिश्रमिकस्य न्यूनतमसीमाविधानम् ।

(७) पञ्चाशतलक्षहैक्टेयरपरिमितभूभागस्य सिञ्चनयोग्यतापादनम्, भूत्वा भूगर्भवर्तिनो जलायोपभोगयोग्यताविधानञ्च ।

(८) केन्द्रीयशासनाधीनः ऊर्जशक्तिपरिवर्धनकार्यक्रमः ।

(९) तन्तुवायव्यवसाय प्रोत्साहने नूतनः कार्यक्रमः ।

(१०) सर्वसाधारणपरिधानीयवस्त्राणां गुणाधानात्मकः परिष्कारः सुलभत्वञ्च ।

(११) नगरेष्वतिरिक्तभूमेः समाजवादपथेन जनेषु वितरणम् । ईदृग्भूमेश्चाधिपत्ये ग्रहणे च मात्रानिर्धारणम् । नूतनावासनिर्माणार्थञ्च भूमेरियत्तानिर्धारणम् ।

(१२) अतिभव्यभवनानां विधिवन्मूल्याङ्कनस्य करस्तेयविरोधाय च विशिष्टायोगनिर्माणम् करचौरेषु धनिकेषु कठोरदण्डविधानञ्च ।

(१३) विशिष्टविधेयकैस्तस्करव्यापारिणां सम्पत्तेरधिग्रहणम् ।

(१४) धननिवेशनियमेषु उदारतानुसरणं, आयातव्यापारे दत्ताज्ञापत्रस्य दुरुपयोगनिवारणम् ।

(१५) उद्योगव्यवसायेषु श्रमिकाणां समुचितसहयोगाय नवनीतेरुद्घोषणम् ।

(१६) राजमार्गपरिवहनव्यवमाये आज्ञापत्रदानार्थं राष्ट्रियनीतेरवधारणम् ।

(१७) अष्टसहस्रमुद्रापर्य्यन्तं करमुक्तेः सीमानिर्धारणम् ।

(१८) छात्रावासेष्वेव छात्रेभ्यः आवश्यकवस्तूनां नियंत्रितमूल्यैः प्रतिदानम् ।

(१९) लेखनसामग्र्याः पुस्तकादीनाञ्च नियंत्रितमूल्येन विक्रयणम् ।

(२०) निम्नवर्गीयेभ्यो नवव्यवसायशिक्षणार्थमाजीविकाप्रदानार्थञ्च नूतननियमोद्घोषणम् ।

## ६८. प्रजातंत्रम्

**अद्यत्वे राज्यशासनसञ्चालनार्थं बहूनि तंत्राणि विद्यन्ते**
**एकस्मिन् देशे एकविधमपरत्र चापरविधम् ।**
**परमन्ततो गत्वा द्विविधे एव तंत्रे विशिष्टे—**
**एक प्रजातंत्रं द्वितीयञ्च एकाधिपत्यं तंत्रमिति ।**

तत्र 'एकाधिपत्ये' तंत्रे एकस्मिन्नेव व्यक्तौ शासनस्य सर्वा एव शक्तयः सन्निहिताः सन्ति । एक एव पुरुषो नारी वा राज्ये प्रजाः शास्ति । तस्यैवेच्छया निर्देशेन वा शासनस्य सकलकार्यकलापः सञ्चालितो भवति, तस्य कार्यस्य समीक्षामालोचनां वा न कोऽपि कर्तुं शक्तः । यथा हि, द्वितीयविश्वयुद्धे जर्मनीदेशस्य शासको 'हिटलरमहाशयः'', इटलीदेशस्य च प्रशासकः मुसोलिनीमहोदयः एतौ द्वावपि एकाधिपत्यशासकौ बभूवतुः । परं तयोरन्ते कीदृशी दुर्गतिर्जाता, इति सर्वविदितमेव । न कोऽपि तयोर्नामापि स्मर्तुं वाञ्छति इति हेतोः एकाधिपत्यं तंत्रं न प्रजाहितं भवतीति निश्चितम् ।

प्रजातन्त्रमेव सर्वश्रेष्ठं शासनतंत्रं वर्तते, इष्यते समर्थ्यते च सर्वैः। तत्राधुना तदेव वर्ण्यते :—

तत्रादौ तस्य परिभाषा यथा भिन्नैः भिन्नैराचार्यैः विद्वद्भिश्च कृता सैव लिख्यते :—

तत्र 'सीलेमहोदयस्य मतमिदं—यत्तदेव प्रजातंत्रशासनं भवितुमर्हति यत्र शासने सर्वेषां भागः सम्भवेत्।

परमिदं त्वसम्भवं यत्सर्वेजनाः शासने पदं प्राप्नुयुः :—

अतो नेदं मतं समीचीनम्—

तत्र अब्राहम लिङ्कनमहोदय एवं भाषते :—

यस्मिन् शासने प्रजायाः शासनं प्रजया प्रजायै च जायते तदेव प्रजातंत्रशासनमिति वक्तुं शक्यते इयमेव परिभाषा सर्वोत्कृष्टा सर्वमान्या च वरीवर्ति।

"प्रजातंत्रशासनं बहुमतशासन" मिति यत् 'जयसी' महोदयेनोक्तं तदपि न चारु-यतःकेवलं बहुमतशासनमेव नेष्टं-परन्तु प्रजया यथाविधि निर्वाचितसदस्यानामेव बहुमतमिष्यते-तदेव प्रजातंत्रशासनमुच्यते। अतः प्रजातंत्रस्येदमेव लक्षणं सर्वोत्कृष्टं भवितुं शक्यते यत्र प्रजाशासने व्यापकनिर्वाचनमुखेन निर्वाचितैः सदस्यैः बहुमतबलात् शासनं क्रियते।

तत्र प्रजातंत्रस्य गुणदोषविवेचने आदौ गुणा एव उच्यन्ते :—

(१) अतः प्रजातंत्रपद्धतौ प्रजा स्वयमेव सदस्यान चिनोति, निर्वाचितसदस्यैश्च बहुमतबलात्सर्वकारश्च निर्मीयते। सर्वकारश्च प्रजां प्रत्येवोत्तरदायित्वं निर्वहते—एवं प्रजाहितविरुद्धं न कदाप्याचरति।

(२) प्रज तंत्रशासने सर्वे जनाः समानाधिकारं भजन्ते तत्र न केनापि कोऽपि जातिभेदः, वर्णभेदो वर्गभेदो वा क्रियते, शासने च सर्वे स्वस्वयोग्यतानुसारं पदं लभन्ते। न च केनचिद् धनिकवर्गेण निर्धनवर्गस्य शोषणं क्रियते एवं च जनक्रान्तेरप्याशङ्का नैव जायते, सर्वकारश्च स्थायित्वं प्राप्नोति।

(३) प्रजातंत्रे लोकानां नैतिकमहत्त्वमपि वर्धते एव। सर्वे सदस्यजनाश्च नैतिकदृष्ट्या निष्ठापूर्वकं, स्वस्वकर्त्तव्यं परिपालयन्ति। स्वकीयदेश प्रति श्रद्धा भक्तिश्च वर्द्धत एव।

इत्थं प्रकारेणेदं वक्तुं शक्यते-यत्प्रजातंत्रशासन पद्धतिरेव सर्वोत्कृष्टेत्वेन विराजते-यदस्मिन् लोकाः स्वाधिकारान् स्वकर्त्तव्यानि च अवगम्य यथोचितं कर्म कुर्वन्तो। सर्वकारोऽपि प्रजालोचनाभयेन स्वेच्छाचारितां न श्रयते। सर्वे च पारस्पारिकसहयोगं बुद्धयाचरन्ति। तदेव शुभं सर्वेषां कृते।

(४) परन्तु केषाञ्चिद् विज्ञानां मतेऽस्मिन् तंत्रे केचिद् दोषा अपि विद्यन्ते—माकालर्यिलमते संसारे जनानां केवलं दशमो भागः एव शिक्षितः शेषा अशिक्षितान्धकारे एव परिभ्रमन्ति :—

(१) शिक्षायाः अभावे च तेषां बुद्धिः परिपक्वतां न याति। अशिक्षितैरशिक्षिता एव निर्वाचिताः सदस्याः सर्वकारं निर्मान्ति, तादृशैरयोग्यैः कृता निर्णया अपि न लोकहिताय जायन्ते अदूरदर्शितत्वात्। एवञ्च शासनमपि अकुशलत्वदोषेण दुष्यति।

(२) शौर्यशाशिताशु न्यायेनान्यायेन वा सर्वाञ्जनान् पत्रादींश्च कुप्रचारपथेन धनादिना वा शासनप्रभावाद्वा वशीकृत्य निर्वाचनकाले मतदातॄन् प्रभावच्चानुचितरीत्यैव स्वदलाय लोकं बहुमतं निष्पादयन्ति, स्वेच्छाचारितया वातावरणं दूषयन्ति।

संख्यायां बुद्धिमतामल्पत्त्वाच्च देशाय महत्त्वपूर्णनिर्णयकालेषु तेषां शासकवर्गैः न किञ्चिदपि साहाय्यं गृह्यते न च तेषां कुत्रचिदुचितः समादरो भवति। शासकवर्गीयाः सदस्याश्च यथेच्छपुच्छृङ्खलतयान्यान् राजनीतौ वृद्धान् योग्यतमान्नपि तृणवन्मन्यन्ते।

(५) निर्वाचनकार्येषु च जनानां सर्वकारस्य च प्रभूतो धनराशिर्व्ययीभवति। इतीत्थं दोषाणां दीर्घा परम्परा गण्यते कैश्चिद्विज्ञैः।

**निष्कर्षः**— तत्र निष्कर्षरूपेणेदमेवोच्यते—यदुपर्युक्तान् दोषान् यथाशक्ति परिहार्यं यदि नाम प्रजातंत्रप्रणालिः पूर्णनिष्ठया परिपाल्यते तदै-

वेयः सर्वोत्कृष्टरूपेण भवितुं शक्यते नान्यथा। एतेष्वपि दोषेषु तारतम्यबलादियमेव पद्धतिः सर्वश्रेष्ठेति बहुभिः स्वीक्रियते।

## ६६. न नीतिविज्ञेषु वयः समीक्ष्यते

संसारेऽस्मिन् गुणा एव पूजास्थानं न तु कश्चिद् वाह्यचिन्हविशेषः। अयं नियमो न केवलं मानवेष्वेव वर्तते परं निर्जीवपदार्थेष्वपि संघटते—वाह्यतः सुन्दराः प्रतीयमाना अपि सुगन्धवहीनत्वान्न केनापि समाद्रियन्ते किंशुकाः: आकारे मात्रायाञ्च भूयिष्ठमपि क्षीरनिधितोयः क्षारत्वादेव न केनापि पातुं शक्यते। सत्यमुक्तं केनापि कविना—

"विक्रियन्ते न घण्टाभिर्गावो दुग्धविवर्जिता"।

अपरञ्च, लघ्वपि वस्तु गुणानां सद्भावत्वाल्लोकैः श्लाघ्यते अयं हि सार्वभौमः सिद्धान्तः, "यत्र यत्र गुणास्तत्रतत्रैव गौरवम्" यन्नैतत् तन्नैतत् "गुणाः पुनः स्वल्पेऽपि वस्तुनि प्रादुर्भवितुं शक्यन्ते न हितैः किञ्चिद्वाह्यं चिह्नं वयः, लिङ्गं वा समपेक्ष्यते, लघुरपि पदार्थः विपुलशक्तेः सम्भवाल्लोके चाकचक्यं जनयति। भूतसंहारकारकमणुवमास्त्र को न जानाति। अणोरणीणीयान् पदार्थः सकलमपि जगत् क्षणादेह विध्वंसयितुं शक्तः। इति किं न चित्रमेतत्? विषस्य स्वल्पमपि खण्डमसंख्यान् जनान् घातयितुमलम। स्वल्पमप्यौषधं मृत्युभयङ्करमपि रोग हतुं शक्नोति।

प्राणिनां विषयेष्वपि एवमेव वक्तुं शक्यते। लघ्वाकारोऽपि श्रीरामो निजदिव्यास्त्रशक्तिप्रभावात्क्रूरमत्याचारिणं सर्वदा देवान् रोदयन्तमिति रावणमपि लोकत्रयभयङ्करं युद्धे निजधान। वातजातो वानरोऽपि हनुमान् श्रीरामस्य परमभक्तो निजविपुलशक्तेः कारणादेव श्रीसीतान्वेषणलङ्कादाहादि कार्येषु साफल्यं लब्धवान्।

एवमेव महाभारतयुद्धेसंख्यायां पञ्चैव भूत्वा पाण्डवाः निजचारित्र्यबुद्धि-मात्र बलेनैव बहुसंख्यकानपि कौरवान् पराजयितुं शक्ताः। एवञ्च निशुम्भशुम्भहन्त्री एकाकिन्यपि दुर्गा निजालौकिकतेजसोदिव्यशक्तेश्च

प्रभवादेव लोकत्रयप्रपीडकान् क्रूरतमान् राक्षसानपि युद्धे निहन्तुं समर्थो बभूव ।

अपरञ्च वयानात्वधीमानपि शुकदेवोमुनिः निजाध्यात्मिकबलेनैव जरठैः वृद्धैरपि ऋषिभिः समादृतः परिपूजित आसीत् ।

(i) जनकसभायां स्त्रियापि मत्वा गार्गया वादप्रतिवादे याज्ञवल्क्यो मुनिः पराजितः इति को न जानाति ।

(ii) दूरे तावद् भूतकालवार्ता, वर्तमानकालेऽपि एष एव नियमः सर्वत्र चरितार्थो दृश्यते ।

अस्मत् प्रधानमंत्रिपदे नियुक्ता श्रीमतीन्दरागान्धीमहाभागा विराजतेतराम् । यासौ दुर्गेवशत्रुभयवर्धिनी कालीवक्रूरशत्रुहन्त्री, काले च महाराज्ञी झांसीवत्प्रकटितशौर्या, विचित्रसाहसं प्रदर्शयन्तो वृद्धान् राजनीतिज्ञानपि स्वगुणैरतिक्रामते । इज्राइलदेशेऽपि श्रीमती गोलडामाइरनाम्नी प्रधानमंत्रिपदमलञ्चकार, श्रीलङ्कायामपि श्रीमती "भण्डारनायके" इति नाम्नी प्रधानमंत्रिपदे नियुक्तास्ति परं ताभ्य अस्माकं प्रधानमन्त्री श्रीमतीन्दरागान्धी अतिशैते । यदनया कृतं न केनापि पूर्ववर्तिना प्रधानमंत्रिणा कृतम् किं बहुना अस्याः पिता श्री पं० जवाहरलालोऽपि स्वकीयाष्टादशवर्षीयु प्रधानमंत्रिकाले न शशाक तत्कर्तुं यदनया श्रीमत्याद्भुतसाहसपूर्वकं कृतमिति सर्वविदितचरमेव ।

अस्या एव राजनीतौ प्रौढतायाः परिणामोऽयं यत्पूर्वीपाकिस्तानाख्यो देशः बङ्गलादेशोनाम्ना पूर्णतया स्वतन्त्ररूपेण परिवर्तितोभूत्वा भारताय परमां मैत्रीं भजते । इतः पूर्वं अस्माभिः शत्रुतां वहतेस्म अस्य सर्वं श्रेय इन्दिरामेव भजते ।

(iii) अस्या एव प्रधानमंत्रिकाले राज्यस्थाने प्ररमाणवमास्त्रमपि विस्फोटितं वैज्ञानिकैः येन चास्माकं देशः विज्ञानक्षेत्रेऽपि अनुप्रधानदेशेष्वन्यतमः सञ्जातः, किमिदं स्वल्पं गौरवार्हमस्मभ्यम् ।

(iv) देशीयविदेशीय समस्या अपि अनया सुष्ठुतया संशोधिता समस्त देशस्यार्थिकं सामाजिकं राजनैतिकञ्च वा स्वरूपं तथानितरां परिष्कृतं

सर्वत्रदृढानुशासनस्य तथा वातावरणं सम्पादितं येन सर्वे कूटनीतिज्ञा स्वदेशीया वैदेशिका आश्चर्यचकिताः मूकभावेन विस्मयस्य परां कोटिं समधिगताः । भ्रष्टाचारपापाचारदुराचारवृहद्वृक्षाणां मूलोच्छेदिनीयं जगति स्वकीयं लोकोत्तरसाहसिककृत्यैः महदाश्चर्य्यमुत्पादयति,

एवमुक्तकीत्या विस्पष्टमिदं जातं—यल्लौके गुणा एव पूजास्थानं न च तत्र वयः, लघु, दीर्घम्वा, लिङ्गं, स्त्रीलिङ्गं, पुल्लिङ्गं वा किञ्चिद् गण्यते राजनीति क्षेत्रेऽपि एवमेव वक्तुं शक्यते --

**सत्यमुक्तं हि भवभूतिना गुणा पूजास्थानं गुणिषु न च लिङ्ग न च वयः ।**
**तत्र कालिदासोऽप्याह तेजसां हि न वयः समीक्ष्यते ।।**

## ७०. कालिदासस्य प्रकृतिविवेचनम्

**प्रास्ताविकम्**—कविः लोकोत्तरप्राणी काव्यजगत्कर्तेत्युच्यते । कविस्तु स्वविलक्षणप्रतिभया शुष्कान्यपि वर्णनानि सरसानि करोति । तथा च व्यासेन कवेः कर्मवैचित्र्यं वर्णयता व्यलेखि-यत्—

**अपारे काव्यसंसारे कविरेव प्रजापतिः ।**
**यथास्मै रोचते विश्वं तथेदं परिवर्तते ।।**

कालिदासस्तु संस्कृतस्यैव न अपितु विश्वसाहित्यस्य लोकोत्तरः महाकविरस्ति । कालिदासः स्वरचनासु सर्वविधं काव्यवैशिष्ट्यं विलक्षणप्रतिभयाऽवर्णयत् । तस्य प्रकृतिचित्रणमपि विश्वसाहित्येऽसाधारणमस्ति । परवर्तिनः कवयस्तु-कालिदासस्य प्रकृतिवर्णनमाश्रित्य लोके प्रसिद्धिमवाप्य यशः शरीरेणाऽमराः बभूवुः । कालिदासः सप्तग्रन्थानरचयत् । तेषां नामानीमानि सन्ति—

१. ऋतुसंहारम् (खण्डकाव्यम्), २. मेघदूतम् (खण्डकाव्यम्), ३. विक्रमोर्वशीयम् (नाटकम्), ४. मालविकाग्निमित्रम् (नाटकम्), ५. अभिज्ञानशाकुन्तलम् (नाटकम्), ६. कुमारसम्भवम् (महाकाव्यम्), ७. रघुवंशम् (महाकाव्यम्) ।

एषु सप्तसु अपि ग्रन्थेषु पर्याप्तं प्रकृतिचित्रणम् संदृश्यते । ऋतुसंहारे षण्णामृतूनाम् कामोद्दीपकम् प्रकृतिचित्रणं श्रृंगाररसानुकूलं प्राप्यते । मेघदूतनामकखण्डकाव्ये तु प्रकृतेः मानवीकरणरूपमत्याश्चर्यकरं सहृदयाह्लादकं स्वरूपं पदे पदे संदृश्यते । विरही यक्षः आषाढमासस्य प्रथमदिवसे नूतनं मेघखण्डमेकमवलोक्यैव तस्य मानवीकरणस्वरूपम् वर्णयन् प्रार्थयत् यत्—

**धूमज्योतिः सलिलमरुतां सन्निपातः क्व मेघः,**
**सन्देशार्थाः क्व पटुकरणैः प्राणिभिः प्रापणीयाः ।**
**इत्यौत्सुक्यादपरिगणयन्गुह्यकस्त ययाचे,**
**कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु ।।** (मेघ–५)

यक्षः स्वविरहेण मेघस्वरूपमविचार्य तं प्रशंसन् सन्देशं नेतुमकथयत्–यत्–हे मेघ !

**जातं वंशे भुवनविदिते पुष्करावर्तकानां,**
**जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः ।**
**तेनार्थित्वं त्वयि विधिवशाद् दूरबन्धुर्गतोऽहं,**
**याञ्चा मोघा वरमधिगुणे नाधमे लब्धकामा ।।** (मेघ०–६)

प्रकृतेः मानवीकरणस्वरूपस्येदमुत्कृष्टमुदाहरणमस्ति-इति सर्वैः सानन्दं स्वीक्रियते । मेघस्योच्चवंशस्य वर्णनं कृत्वा स्वाभीष्टमनोरथमब्रवीत् यत्—

**सन्तप्तानां त्वमसि शरणं तत्पयोद प्रियायाः,**
**सन्देशं मे हर धनपतिक्रोधविश्लेषितस्य ।**
**गन्तव्या ते वसतिरलका नाम यक्षेश्वराणां,**
**बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या ।।** (मेघ–७)

हे मेघ ! त्वमेव पीडितानां सहायकोऽसि । अतः हे जलद मम विरहिणः यक्षस्य सन्देशं पत्न्याः समीपम् अलकापुरीं प्रापय । कालिदासस्य मेघदूते तु सर्वत्र प्रकृतिचित्रणस्य सर्वोत्कृष्टचित्रणमनुभूयते । प्रायः सर्वेऽपि श्लोकाः प्रकृतिचित्रणस्योदाहरणानि सन्ति । मेघदूतस्य प्रकृति-

चित्रणस्य तुलनां न कोऽपि कर्तुं शक्नोति, अशक्नोत् शक्ष्यति च। कालिदासस्य प्रकृतिचित्रणानि सजीवानि सरसानि, मृदूनि अतीवमनोहराणि च सन्ति ।

कालिदासः रघुवंशस्य त्रयोदशे सर्गे प्रकृतिचित्रणस्य मधुरं, कोमलं, स्निग्धं च वर्णनं कुर्वन् व्यलिखत्—

क्वचित्प्रभालेपिभिरिन्द्रनीलैर्मुक्तामयी यष्टिरिवानुविद्धा ।
अन्यत्र माला सितपङ्कजानामिन्दीवरैरुत्खचितान्तरेव ।।
क्वचित्खगानां प्रियमानसानां कादम्बसंसर्गवतीव पंक्तिः ।
अन्यत्र कालागुरुदत्तपत्रा भक्तिर्भुवश्चन्दनकल्पितेव ।।

(रघुवंश १३-५३-५४)

कुमारसम्भवस्य अष्टमे सर्गे चन्द्रः स्वदयितायाः रजन्याः मुखं चुम्बतीत्यस्य वर्णनं कुर्वन्नलिखत्—

अङ्गुलीभिरिव केशसंचयं सन्निगृह्य तिमिरं मरीचिभिः ।
कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ।।

(कुमार सं० ८–६३)

अस्यायमाशयः चन्द्रः स्वकिरणरूपिभिः कोमलाङ्गुलीभिः रजन्याः विस्तृतमन्धकाररूपं केशपाशं संगृह्य रजन्याः अर्धविकसितकमलरूपनेत्रसहितं मुखमण्डलं चुम्बति । मानवीयसौन्दर्यस्य विश्लेषणं प्रकृतिचित्रणमेव स्वीक्रियते । पार्वत्याः नेत्रयोः तुलना मृग्याः नेत्राभ्यामेव वर्णितमस्ति । तथाहि—

आवर्जिता किञ्चिदिव स्तनाभ्यां वासो वसाना तरुणार्करागम् ।
पर्याप्तपुष्पस्तबकावनम्रा संचारिणी पल्लविनी लतेव ।।

(कु० सं० ३।५४।।)

कालिदासः प्रकृतेः चित्रणं चेतनारहितं निष्प्राणं न चित्रितमकरोत् अपि तु कालिदासस्य प्रकृतिचित्रणे मानवीयदुःखसुखादीनामपि भावानां संवेदनशीलं स्वरूपं प्राचुर्येण समुपलभ्यते । उदाहरणार्थमभिज्ञानशाकुन्तलस्यायं श्लोकः उद्धर्तुम् शक्यते—

उद्गलितदर्भकवला परित्यक्तनर्तना मयूराः ।
अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः ।।

अर्थात् शकुन्तलायाः पतिगृहगमनवृत्तान्तं निशम्य मृग्यः घासचर्वणं पर्यत्यजन्, मयूराः नर्त्तनम् अत्यजन्, पीतपत्राणि निपातयन्त्यः लताः शकुन्तलायाः विरहेण अश्रूणिपातयन्त्य इव प्रतीयन्ते स्म । शकुन्तलायाः सौन्दर्यं वर्णयन् कालिदासोऽलिखत् यत्—

अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू ।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम् ।।

वस्तुतः कालिदासः प्रकृतेः विविधस्वरूपाणां चित्रणं वैलक्षण्येनावर्णयत् । कालिदासस्य प्रकृतिचित्राणि मनोहराणि, मानवीयभावनास्पष्टकराणि कामोद्दीपकानि, मानवीयकरणस्वरूपाधायकानि एव न सन्ति अपि तु कालिदासस्य प्रकृतिचित्रणानि सत्यस्य सदाचारस्य आदर्शस्य विधिविडम्बनायाश्च सूचकानि उदात्तवर्णनानि प्राप्यन्ते । कण्वशिष्यः समयं ज्ञातुं बहिर्निगत्य प्रकाशं च निरूप्य कथयति हन्त ! प्रभातम् । यतः—

यात्येकतोऽस्तशिखरं पतिरोषधीनाम्
आविष्कृतोरुणपुरस्सर एकतोऽर्कः ।
तेजोद्वयस्य युगपद् व्यसनोदयाभ्यां
लोको नियम्यत इवात्मदशान्तरेषु ।।

नियतिवन्धनस्य अपरिहार्यतां सूत्रयन् कालिदासः चतुर्थेऽङ्के शकुन्तलासहितेषु तपस्विष्वागतेषु यदा काञ्चुकीयः प्रथमं दुष्यन्त तेषामागमनं सूत्रयितुं संकोचमनुभवति तदानीमेव—स राजधर्मस्य महत्वं स्मरन् अकथयत्-यत्—

भानुः सकृद्युक्ततुरङ्ग एव, रात्रिंदिवं गन्धवहः प्रयाति ।
शेषः सदैवाहितभूमिभारः षष्ठांशवृत्तेरपि धर्म एषः ।।

अर्थात् सूर्यः सकृदेव अश्वान् रथे योजयति, वायुः निरन्तरमहर्निशं प्रवहति, शेषः सदा भूभारं शिरसि धारयति । षष्ठांशभोक्तुः नृपस्यापि

अयमेव धर्मः यत् सः दिवानिशं प्रजाकार्यमवेक्षेत—अतः गत्वा तं निवेदयामि । पुनश्च नृपं प्रशंसन् समवोचत्—यत्—

स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः,
प्रतिदिनमथवा ते वृत्तिरेवंविधैव ।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं,
शमयति परितापं छायया संश्रितानाम् ॥

उपर्युक्तविवचनेन एतत्स्पष्टं प्रतीयते—यत् कालिदासस्य प्रकृतिचित्रणस्य तुलनां न कोऽपि कर्तुं प्रभवति । वस्तुतः कालिदासस्य कृतिषु प्रकृतेः सुकुमारतरं, मनोहारि, सहृदयाह्लादकं, सरसं कान्तं, रमणीयं, मानवीयकरणपरिचायकं, दर्शनसम्बन्धि, मर्यादितं, पवित्रप्रेमपुष्टिकरं सरसमतीवोदात्तमसाधारणं प्रकृतिचित्रणं दर्शं दर्शं, श्रावं मनसा ध्यायं ध्यायमनुभावमनुभावं चैतद् वक्तुं शक्यते यत्प्रकृतिचित्रणे कालिदासः सर्वोत्कृष्टः महाकविरस्ति इत्यत्र कोऽपि संशयलवोऽपि नास्ति ।

## ७१. काव्येषु नाटकं रम्यम्

**प्रास्ताविकम्**– लोकोत्तरवर्णनानिपुणकविकर्म काव्यमिति काव्यस्य सामान्यं स्वरूपमुच्यते । तत्काव्यन्तु श्रव्यदृश्यभेदेन द्विविधं भवति–तथा चाह विश्वनाथः साहित्यदर्पणस्य षष्ठपरिच्छेदे-'दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधामतम्' । तत्र प्राधान्येन श्रवणपदवीं प्राप्य सचेतसां हृदयावर्जकं काव्यं श्रव्यमिति कथ्यते । दर्शकानां सहृदयसामाजिकानां नेत्रानन्दविधायकं सहृदयहृदयाकर्षकं काव्यं दृश्यमित्युच्यते । दृश्यमेव काव्यं नाटकं कथ्यते ।

**नाट्यन्तु**—अवस्थानुकृतिर्नाट्यम् । काव्ये निबद्धः धरोदात्त-धीरोद्धत-धीरललित-धीरप्रशान्तानां नायकानामवस्थानुकारः चतुर्विधाभिनयनाट्य कौशलेन अभिनेतुर्नटस्य नायकेन तादात्म्यापत्तिरेव नाट्यमिति । अभिनेतुं योग्यमभिनेयमिति व्युत्पत्त्यनुसारेण नटादिभिरभिनीयमानं

नायकादानीम् चरितमेवाभिनयमुच्यते। एतदभिनयमेव नटे रामादिनायकानां स्वरूपारोपणात् रूपकमिति अभिधीयते। तथाचोक्तं साहित्यदर्पणे,—तद्रूपारोपात्तु रूपकमिति—यथा—मुखाकरचरणेषु कमलस्यारोपत्वात्—रूपकाऽलंकारो भवति तथैव नायकादीनां स्वरूपारोपात्—रूपकमित्युच्यते। अस्याभिनयस्यापि आङ्गिकवाचिकाहार्यं सात्विकभेदेन चत्वारो भेदाः भवन्ति। तथा चाह। दशरूपके—"भवेदभिनयोऽवस्थानुकारः सः चतुर्विधः। आङ्गिकोवाचकश्चैवमाहार्यः सात्विकस्तथा"। नाटचशास्त्रेऽपि—"त्रिविधस्त्वाङ्गिको ज्ञेयः—शारीरो मुखजस्तथा। तथा चेष्टाकृतश्चैव शाखाङ्गोपाङ्गसंयुतः" इत्यनेनाङ्गकस्याभिनयस्य त्रयोभेदाः भवन्ति। वाचा निष्पन्नोऽभिनयः वाचिकः, वेषरचनादिभिः निष्पाद्यः आहार्यः, स्तम्भस्वेदानुरूपः सात्त्विकश्चोच्यते। एवमभिनयस्यभेदाः प्रदर्शिताः सन्ति।

**नाट्यभेदः**—रसाश्रयेण, रूपकापरपर्यायेण च नाटचस्य प्राधान्येन दश भेदाः भवन्ति। यथा च दशरूपके द्रष्टव्यमिति—

> **नाटक सप्रकरणं भाणः प्रहसनं डिमः।**
> **व्यायोग समवकारौ वीथ्यङ्केहामृगा इति॥**

दशानामप्येषामवस्थानुकारात्मकत्वेन अभेदेऽपि वस्तु, नेता, रसस्तेषां भेदहेतवः भवन्ति। तथा चोक्तं धनञ्जयेन—"वस्तुनेता रसस्तेषा भेदकः" इति। साहित्यदर्पणे नाटकलक्षणम् प्रतिपादयता विश्वनाथेनप्रोक्तम्—

> **"नाटकं ख्यातवृत्तं स्यात्पञ्चसन्धिसमन्वितम।**
> **विलासद्धर्यादिगुणवद् युक्तं नानाविभूतिभिः॥**
> **सुखदुःखसमद्भूतिनाना रसनिरन्तरम्।**
> **पञ्चादिका दशपरास्तत्रांका परिकीर्तिताः॥**
> **प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान्।**
> **दिव्योऽथ दिव्यादिव्यो वा गुणवान् नायको मतः॥**
> **एक एव भवेदङ्गी शृङ्गारो वीर एव वा।**
> **अङ्गमन्ये रसाः सर्वे॥"**

उपरूपकाणि त्वष्टादशविधानि सन्ति-"नाटिका त्रोटकं गोष्ठी सट्टकं नाट्यरासकम्। विना विशेष सर्वेषां लक्ष्म नाटकवन्मतम् ।" एवंविधिना नाटकस्यलक्षणं भेदाश्च प्रदर्शिताः सन्ति । प्राधान्येन शृङ्गारः वीरो वा रस स्यात्—धोरोदात्तादिषु कश्चिदुच्च कुलोत्पन्नः नेता स्यात् । दिव्योऽथवाऽदिव्यो अथवा दिव्यादिव्यश्च नेता स्यात् । इत्यादिकथनैः नाटकस्य स्वरूपम् प्रतिपादितमस्ति ।

**नाटकेषु रमणोयता**—कतिचिद्विद्वांसः कलायाः अन्तःकाव्यान्येव न सन्ति अपि तु कलाया अन्तः ललितकलासु दृश्यते इति मन्यन्ते । मुख्यरूपेण ललित कला पञ्च स्वीक्रियन्ते वास्तुकला, मूर्तिकला, चित्रकला, संगीतकला, काव्यकला चेति । आसु पञ्चसु कलासु —यस्याः कलायाः निरूपणे न्यूनतमानि साधनानि प्रयुज्यन्ते सैव कला श्रेष्ठतमोच्यते । अतः वास्तुकलाया अपेक्षयामूर्तिकला श्रेष्ठाऽस्ति । क्रमशोविवेचने काव्यकलायामेव न्यूनतमसाधनान्युपयुज्यन्तेऽतः काव्यकलैव श्रेष्ठतमा कलाऽस्ति । तत्रापि काव्यस्य श्रव्यापेक्षया दृश्यकाव्येऽधिकतरम् रमणीयत्वमास्वाद्यते । यतश्च श्रव्यकाव्ये तु रमणीयत्वोपपादकानि तत्त्वानि केवलं श्रवणाभ्यामेव आस्वादकराणि भवन्ति । तथा सहृदयाः श्रव्यकाव्यान्तर्गतानां भावानां कल्पनाशक्त्या चित्तं हृन्मानसेऽङ्कितं कृत्वा कष्टमनुभवन्ति । येन रमणीतायाः पूर्णआस्वादोऽनुभोक्तुं न पार्यतेऽतः दृश्यकाव्ये कष्टकल्पनया रमणीयतायाः वास्तविकं स्वरूपमनायासेनास्वादयितुं शक्यते ।

अतएव साहित्यजगति नाटकस्यैव सर्वातिशायिनी प्रतिष्ठा श्रूयते "काव्येषु नाटकं रम्यम्" इनि । इदमेव कारणमस्ति—यत्—अलौकिक कलाकौशलेनाभिनयनैपुण्येन प्रदर्शितनाटकावलोकनेनैव सर्वोऽपि भावः नायकनायिकादानां सामाजिकानां चेतस्सु साक्षादंकितो भूत्वा सद्योरसानुभूति विषयो भवति । श्रव्य काव्ये तु यद्यदनुभूयते श्रवणसाहाय्येन दृश्ये तु तत्सर्वं सूक्ष्मातिसूक्ष्ममप्रयासेनैव सहृदयैरनुभूयतेऽतः श्रव्यापेक्षया दृश्यस्य रमणीयता सुतरां श्रेष्ठतमां पदवीमध्यास्ते । "सद्यः प्रीतिकरो

राग:" इति यच्छ्रूयते तदपि दृश्य—एवास्वादयितुं पूर्णरूपेण शक्यते। नाटचशास्त्राविष्कर्त्रा भरतमुनिनाऽपि नाटचशास्त्रे प्रत्यपादितथाहि समीक्ष्यन्ताम्—

न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला।
न तत्कर्म न वा योगो नाटके यन्न दृश्यते॥

अतः संस्कृतनाटकानि अन्यासां भाषाणां नाटकानामपेक्षया सरसवचनरचनया काव्यकलाकौशलशैल्या प्रायशः सुखान्तानि सद्योरसानुभूतऽतिप्रसिद्धानि सन्तीति सर्वैरपि सोल्लासं स्वीक्रियन्ते। संस्कृतनाटकानि तु नान्दीपताकाप्रकरीपञ्चसन्ध्यर्थप्रकृत्यादिभिः निबद्धानि। जीवनस्य सुखैश्वर्यव्यावहारिकराजनीति शिक्षाणामुपदेशः तत्र सामाजिकैरनुभूयते। यथाऽभिज्ञानशाकुन्तले कविकुलगुरुः कालिदासः हस्तिनापुरगमनोद्यतां शकुन्तलाम् गार्हस्थ्यमुपदेष्टुम् काश्यपमुखेन श्लोकमिमम् संदिश्य भारतीयमहिलानामादर्शस्वरूपम् प्रत्यपादयन्नलिखत्-यत्—

शुश्रूषस्व गुरून् कुरु प्रिय सखी वृत्तिं सपत्नीजने,
भर्त्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः।
भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी,
यान्त्येवं गृहिणीपदं युवतयो वामा कुलस्याधयः॥"

अपि च—

"अभिजनवतो भर्तुः श्लाघ्ये स्थिता गृहिणीपदे।"
"सेय याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम्॥"

इत्यादिभिरुदाहरणैः काश्यपस्य भावानां रमणीयता केषां चेतांसि न समावर्जयति। नागानन्दनाटके दयावीरस्य यच्चित्रमवलोक्यते—तदवलोक्य कस्य हृदयं कारुण्येन नाप्लावितं स्यात्। तथा च—

निराधारं धैर्यं कमिव शरणं यातु विनयः,
क्षमः क्षान्तिं वोढुं क इह विरता दानपरता।
हतं सत्यं सत्यं व्रजतु कृपणा क्वाद्यकरुणा,
जगज्जातं शून्यं त्वयि तनय लोकान्तरगते॥

नागानन्दनाटकस्य पठनेन कस्य दयावीररसप्रवाहेण हृदयं न द्रवीभवति। श्रीहर्षेणैव रत्नावलीनाटिका प्रियदर्शिका च प्रणीते स्तः। रत्नावल्यां सागरिकाऽनुरागवर्णनं सहृदयानां हृदयाह्लादकं कस्य चेतसि सुभगां रमणीयतां न पोषयति। तथा च उत्तररामचरितनाम्नि नाटके सीताविरहेण ग्रावाऽपि रोदिति वज्रस्यापि हृदयं दलतीत्यधीत्य रमणीताया सर्वोत्कृष्टं रूपमास्वादयितुं शक्यते। मुद्राराक्षसे राजनीते दुंरासदाः उपदेशाः एवमेव स्मतिपथेन चेतसि प्रविशन्तः कर्तव्यपरायणतायाम् नियोक्तुं प्रभवन्ति। अपि च—अतीत कालस्य सदाचारिणं कर्त्तव्यपरायणानां नृपाणां, वीराणाम्, देशभक्तानाम् सावित्रीसीताऽऽत्रेयी-अहल्यालक्ष्मीबाईत्यादीनामुदारचित्तानां देवीनामभिनयेनैतदनुभूयते यद्रामवत् प्रवर्तितव्यम् नतुरावणादिवत्—इत्युपदेशोऽपि नाटकेभ्यः संगृह्यतेऽतः नाटकेषु काव्यापेक्षयाऽधिकं रमणीयत्वम् समनुभूयते।

काव्यापेक्षया नाटकानामभिनेतुं रङ्गमञ्चस्य विविधकलात्मक वस्तुविन्यासादिरलङ्कृतस्य साहाय्येन सम्वादादिषु स्वाभाविक सरस काव्यादीनाम् चित्रणेन दृश्यकाव्येऽतीवरमणीयता प्रत्यपादि वस्तुतः लोकोऽयं भिन्नरुचिरस्ति नाटकेष्वपि विभिन्नभावानां चित्रणं विविधरमणीतया सम्पादितत्वाद्—विभिन्नरुचीनपि जनानभिनयं प्रतिसमाकृष्य विविधैः भावैः सामाजिकानां मनांसि रमयति। अस्मिन विषय एव कविकुलगुरुकालिदासः निम्नांकितश्लोकेनालिखत्। यत्—

देवानामिदमामनन्ति मुनयः शान्तं क्रतुं चाक्षुषम्
रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा।
त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते
नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधकम्॥

अतएव विभिन्नरुचीनामपि जनानां समावर्जकेषु नाटकेषु काव्यापेक्षयाऽवश्यं रमणीयत्वं वर्तते, नात्र संशीतिः।

## ७२. गुणाः पूजास्थानं गुणिषु लिंगं न च वयः

**प्रास्ताविकम्**—लोके सर्वसाधारणोऽपि जनः प्रतिष्ठां, यशः सम्मानञ्च कामयते। परं कोऽपि वयसा, वेषेण लिङ्गेन च सम्मानं प्रतिष्ठां न लभते। ये केऽपि सम्मानभाजः सन्ति तथा ये केऽपि सम्मानार्हाः समभूवन् तेऽपि सर्वे स्वगुणैरेव पूज्यतमं स्थानमलङ्कुर्वन्ति तथा चालञ्चक्रुः। एवं हि दृश्यते कोऽपि स्यात् स्त्री स्यात् पुरुषो वा स्यात् तरुणोऽथवा वृद्धःस्यात् परं स एव पूज्यः मान्यश्च भवति यः गुणातिरेकैः शोभते। "गुणैर्हि सर्वत्र पदं निधीयते" 'तेजसां हि वयः न समीक्ष्यते। इत्यादिकथनेन सुस्पष्टं ज्ञायते यत् गुणा एव पूजास्थानमिति हेतोः बहुषु वृद्धेषु विद्यमानेष्वपि गुणवान् बालः युवको वा सम्मानार्हंपदमलङ्करोति। वृद्धा एव सोल्लासं तं पूजयन्ति। इत्येव निश्चेतुं शक्यते। गुणमन्तरा न कोऽपि प्रतिष्ठां लभते अतो गुणाप्तये यत्नो विधेयः स्तदिह पद्येन सुस्पष्टतया प्रतीयते यत्—

**गुणेषु यत्नः पुरुषेण कार्यः,**
**न किञ्चिदप्राप्यतमं गुणानाम्।**
**गुणप्रकर्षादुडुपेन शम्भो,**
**रलङ्घ्यमुल्लंघितमुत्तमाङ्गम्॥**

अतः गुणैः किमपि दुःसाध्यमप्राप्यञ्च नास्ति। तथाहि यदुच्यते 'गुणाः पूजास्थानं' तत्सत्यमेवास्ति।

**गुणानां व्यापकता**—केवलं मनुष्या एव गुणै सम्मान लभन्त इति तु नापितु पशुपक्षिणोऽपि गुणै पूज्याः भवन्ति। तथाहि लोके धेनवः दुग्धदानेनाऽन्यान्पोषयन्ति—इति हेतोः मातृसमाः पूज्यन्ते। वेदेषु पुराणेषु धर्मशास्त्रेषु च गावः मातरः कथ्यन्ते। सिंहस्तु शौर्यातिरेकेण मृगराजस्य पदवीं प्राप्य सर्वानपि पशूनतीत्य वर्तते। अश्वश्च स्वतीव्रगत्या वीरैः यानाय सादरमुपयुज्यते। नीरक्षीरविवेकगुणेन हंसः जनानां सम्मानं लभते। कोकिलास्तावन्मधुरभाषणैः पूज्यन्ते वायसाः न। मयूरोऽपि नृत्यकलाप्रावीण्येन समाद्रियते। शुकाश्च स्पष्टभाषणैः सत्क्रियन्तेऽन्ये

पक्षिणः गुणविवर्जिताः सम्मानं न लभन्ते नच सत्क्रियन्तेऽपि तु तिरस्क्रियन्ते ।

**लिङ्गेन न केऽपि पूज्याः**—केवलं पुँस्त्वेन पुरुषाः स्त्रीत्वेन च स्त्रियः न पूज्यतमं स्थानं लभन्तेऽपितु गुणातिशयेन पुरुषाः स्त्रियो वा बालाः वृद्धाः वाः स्युः त एव समाद्रियन्ते पूज्यन्ते च । तथाहि—गार्गी, मैत्रेय्यात्रयीसावित्र्याहिल्याबाई, लक्ष्मीबाई इत्यादयः स्त्रियः स्वापरिमेयगुणैः सर्वैरपि समादृताः सत्योऽद्यापि सादरं ताः अस्माभिः नमस्क्रियन्ते सत्क्रियन्ते च । अत्रेः पत्नी, अनसूया दिलीपस्य पत्नी सुदक्षिणा, रामस्य पत्नी सीता नलस्य पत्नी दमयन्ती, स्वोदारगुणैः सर्वैरपि पूज्यन्ते नमक्रियन्ते च । महाकविः कल्हणस्तु राजतरङ्गिण्यां स्वरचनायां सूर्यमतीरट्टा, रड्डारत्नादीनां राज्ञीनां गुणगौरवमगायत् । तथाहिपद्यमिदमवलोक्यन्तामुयत्—

**विन्ध्याद्रिमार्गाः पर्याप्ता निष्पर्यन्त प्रभावया ।**
**दुर्गयेव तया देव्या कृताः निहतकण्टकाः ॥**

अपि च महाराजदाहरसेनस्य पत्नी पत्युः मरणानन्तरं स्वयं सैन्यसंचालनं कुर्वती महता शौर्येणाऽयुध्यत । मध्यप्रदेश भूता दुर्गावत्यपि पत्युः मरणानन्तरमकबरशाहस्य सैन्येन सह चिरकालमयुध्यत । अद्यापि इन्द्रिरागान्धीति नाम्ना प्रसिद्धा जवाहरलालस्य नेहरोः दुहिता निर्जलिंगप्पासमर्थकान् भारतीयक्रान्तिदलजनसंघप्रजासमाजवादस्वतन्त्रनिर्दलीयादींश्च पराजयन्ती निजबुद्धिनैपुण्येन नितरां राजते । किमधिकं ब्रूमस्तादववलोकयन्तु यद् बुद्धेः विद्यायाश्चाधिष्ठात्री सरस्वतीर्धनस्य चाधिष्ठात्री लक्ष्मीःशौर्यस्य चाधिष्ठात्री दुर्गाऽपि स्त्रिय एव सन्तीति च स्व स्व गुणातिशयेन सर्वैरपि प्रशस्यमाना स्तूयमाना दिवानिशमभिनन्द्यमानाश्च स्वकृपालवेन जनान् कृतार्थयन्त्यः स्वाभीष्टेषु च योजयन्त्यः कैरपि न स्मर्यन्ते पूज्यन्ते चापि तु सर्वैरेव पूज्यन्ते सत्क्रियन्ते च । तथापि लोके बह्वयः गुणविहीनाः नाद्रियन्तेऽपि तु तिरस्क्रियन्ते च किन्तु मातृस्वरूपाणामासां गुणविरहितानामपि तिरस्करणं नौचित्यमावहति । यथेमाः सर्वा गुणवत्यः न सन्तीति काश्चिदेव गुणगौरवेण पूजार्हास्तथैव

पुरुषा अपि केचिदेव गुणवन्तः सन्तः पूज्यन्ते न च सर्वेऽपि । अतः लिङ्गेन न कोऽपि पूज्यः समादरणीयश्च भवति । गुणाः खलु पूजा स्थानमित्येव सत्यम् ।

**वयसा च न केऽपि पूज्याः**—कस्यापि केशाः श्वेताः स्युः आयुषा च वृद्धः स्यात् तथापि गुणैर्विना न पूजार्हैरिति सूचयन् कश्चिदलिखत्-तथाहि—

**महायनैर्नपलितैर्न वित्तन न बन्धुभिः ।**
**ऋषयश्चक्रिरे धर्मं योऽनचोनः स नो महान् ॥**

इत्यनेन ज्ञायते यत् वयसा कोऽपि न पूज्यते गुणैरेव बालः तरुणः वृद्धः स्त्री वा स्यात् सर्वेऽपि सम्मानार्हाः भवन्तीति हेतोः—विश्वामित्रः स्वयज्ञस्य राक्षसकृतविघ्नान् नाशयितुं दशरथमेत्य रामलक्ष्मणावेवाऽयाचत । दशरथस्याऽपरिमितां सेनामपि नाऽयचतः यतः स जानात्येव यत् कार्यं रामलक्ष्मणौ कर्तुं समर्थौ स्तः तत्कार्यं सैनिकास्तथान्ये वीरा अपि न कर्तुं प्रभवन्तीतिहेतोरेव रामलक्ष्मणौ दशरथमयाचत । तथाहि कालिदासः रघुवंशेऽलिखत्—यत्—

**कौशिकेन स किल क्षितीश्वरो,**
**राममध्वरविघातशान्तये ।**
**काकपक्षधरमेत्य याचित-**
**स्तेजसां हि न वयः समीक्षते ॥**

बालोऽपि रामः शौर्यादिगुणैः ताडकादिराक्षसानव्यापाद्य निर्विघ्नं यज्ञं सम्पादयित्वा मिथिलां प्राप्य प्रख्यातनृपाणां वीरवरोणां च मध्ये शिवधनुः खण्डशः कृत्वा सीतामुपयम्य-एकविंशतिवारं क्षत्रियाणामन्तकरं परशुराममपि सर्वेषु पश्यत्स्वेवाऽनायासेन हसन्नेवाजयदिति सर्वैरेव विदितमस्ति । बाल एव भगवान् श्रीकृष्णः पूतनाकेशिवकासुरकुवलयापीडकंसादींश्च व्यापाद्य पितरौ मातामहञ्च स्वतन्त्रान् विधाय पाण्डवानां राजसूययज्ञेऽनेकेषु विद्वत्सु द्रोणभीष्मपितामहादिषु पूज्यतमं गौरवास्पदं स्थानं गुणैरेव समलञ्चकार । वृद्धेषु वर्तमानेषुअर्जुनः परोक्षे चक्र-

व्यूहभेदनाय चिन्तितान् धर्मराजादीन् विलोक्य व्यूहभेदनायोद्यतो भूत्वा तत्कर्माकरोद् यद् महाबलशालिनः भीमादयोऽपि कर्तुमशक्ता आसन्। अपि च लवकुशावपि—रावणविजयिनीं सेनामपि पदाभ्यामेवाऽनायासेनाऽजयताम्। व्यासपुत्रस्तु शुकोऽपि बाल एव विद्वद्भिः समादृतः सन् लोकहितोपकार्य्युपदेशामृतं लोकानपाययत्। एवं रामकृष्णाभिमन्युलवकुशशुकदेवादीनामल्पीयसि वयस्येव प्रजाभिः विद्वद्भिः वीरवरैश्च कृतं सम्मानं प्रदत्तं च पूज्यतमं स्थानं दर्शं दर्शं सुस्पष्टं भवतीति गुणा एव पूजास्थानमिति। गुणमन्तरेण कोऽपि वृद्धः समादृतो न भवति—बालोऽपि गुणैः समाद्रियतेऽतः वयसा न कोऽपि पूज्यते।

**पूज्यतमा गुणाः**—दयाक्षमौदार्यशौर्यकारुण्यसत्याहिंसाधर्मन्यायलोकहित चारित्र्यादयो गुणा एव सम्मानायाऽपेक्ष्यन्ते चेत्कोऽपि शासकः दयादाक्षिण्यशौर्यादिगुणैः विरहितः स्यात्तदा सः पदासीनोऽपि तिरस्कृतिमेत्य नश्यति। यथा हि नन्दः गुणैर्विरहितः सन्नेव चाणक्येन विनाशं प्राप्य नामशेषतां प्राप। रावणोऽपि विद्वान् वीरश्चासीत्परं सः न्यायविरहितः सन् नाशमलभत। अतएवोच्यतेऽक्षरज्ञानं न ज्ञानं कथ्यते। तथोक्तमस्ति "शास्त्राण्यधीत्यापि भवन्ति मूर्खाः"। इत्यनेन ज्ञायते शास्त्राध्ययनान्तरं धर्मनिरतः न्यायप्रियश्चरित्रवांश्च स्यात्, कदापि दयादाक्षिण्यशौर्यादिगुणान्नातिक्रमेत। राक्षसाः कंसरावणशिशुपालजरासन्धादयः शौर्यवन्त आसन् परमेते दयादाक्षिण्यादिन्यायविरहिता आसन्निति हेतोरेव समाजे नादृताः।

**उपसंहारः**—एभिरुदाहरणैर्विवेचनेन च प्रतीयते यत् कोऽपि गुणैर्विना नाद्रियते न च गौरवास्पदं लभते। अतः सर्वस्मिन्नपि क्षेत्रे धर्मार्थकाममोक्षेषु, राजनीतिषु, विद्यायां, व्याख्याने, युद्धे, क्रीडायां, शासने, देशे, विदेशे, गृहे, बहिः वा भ्रातृषु मित्रेषु परिजनेषु बालेषु, तरुणेषु, वृद्धेषु, च ये केऽपि गुणवन्तः भवन्ति त एव सम्मानभाजः सन्तः गौरवास्पदं स्थानमधिगच्छन्ति। उत्तररामचरिते भवभूतिविरचिते नाटकेऽरुन्धती सीतां प्रशंसन्ती विदेहराजमुद्दिश्य प्राह तदिह—

शिशुर्वा शिष्या वा यदसि मम तत्तिष्ठतु तथा,
विशुद्धेरुत्कर्षस्त्वयि तु मम भक्ति द्रढयति ।
शिशुत्वं स्त्रैणं वा भवतु ननु वन्द्यासि जगतां,
विशुद्धेरुत्कर्षस्त्वयि तु मम भक्ति द्रढयति ॥

इत्यनेन सुस्पष्टं प्रतीयते यत् न कोऽपि वयसा पूज्यते न च लिङ्गेन पुंस्त्वेन स्त्रीत्वेन वा पदासीनेन नृपलाञ्छनेन पूज्यते कोऽपि जनः पुरुषः स्त्री वा शिशुः तरुणो वृद्धो वा स्यात्—यः गुणैः समन्वितः स्यात् स एव पूजार्हः प्रतिष्ठां यशः गौरवञ्चाप्नोति । अतः यदुच्यते गुणाः पूजास्थानमिति तत्तु सर्वथा समीचीनमेवास्ति ।

## प्रसिद्ध निबन्धानां बाह्यरेखा (Outlines)

### वसन्तोत्सवः

१. वसन्तोत्सवो होलिकेत्यपरनाम्ना प्रसिद्धोऽयमुत्सवो महानुत्सवोऽस्ति ।
२. समयः [वसन्तकालः] ।
३. उत्सवस्य कारणम् नवधान्यस्य गृहे आगमनम् ।
४. उत्सवस्यानुष्ठानप्रकारः [बालाः, नराः, नार्यश्च, नृत्यन्ति, गायन्ति, वादयन्ति च नाना वाद्यानि, क्वचिज्जना रङ्गान् प्रक्षिपन्ति] ।
५. उपसंहारः—कुरीतयः परिहर्त्तव्याः ।

### स जातो येन जातेन याति वंशः समुन्नतिम्

[१] क्षुद्राः पुरुषाः स्वकीयोदरपूरणायैव प्रयतन्ते । महापुरुषाः नाहारार्थिनः खलु । 'कीर्तिर्यस्य स जीवति' अयमेव तेषामादर्शमन्त्रः ।

[२] असारः खलु संसारः । मनस्विनस्तु संसारस्येदृशीमसारतां स्मारं स्मारं जीवनसाफल्याय चेष्टन्ते ।

[३] एतादृशाः पुरुषाः स्वकीयैर्लोकोत्तरचरितैर्वंशस्य कीर्तिमपि प्रसारयन्ति ।

[४] इतिहासोऽप्यस्य साक्षी। रामकृष्णबुद्धमहावीराशोकतिलक-गान्धिपटेलनेहरुप्रभतयोऽस्य निदर्शनानि सन्ति।

[५] ये महापुरुषा यशस्कामास्ते कीर्त्यर्थं स्वशरीरमपि त्यजन्ति।

उपसंहारः—अतः सुष्ठु आह कश्चिन्नीतिविशारदः—

परिवर्तिनि संसारे मृतः को वा न जायते।
स जातो येन जातेन याति वंशः समुन्नतिम्॥

## सत्यं ब्रूयात्प्रियं ब्रूयात्

प्रस्तावना—समयानुकूला वाणी श्रेयस्करी।

१. वाणी एव मानवस्य महद् भूषणम्

२. सत्यस्य महत्त्वं सर्वैर्विदितमेव।

'नहि सत्यात्परो धर्मः।' 'मनः सत्येन शुध्यति।'

सत्यवादिना हरिश्चन्द्रेण सत्यपालनाय सर्वस्वं प्रदत्तम। दशरथेन च प्राणा अपि परित्यक्ताः। भगवता बुद्धेन, महावीरस्वामिना चापि मुक्तकण्ठेन सत्यस्य महत्त्वमङ्गीकृतम्। महात्मना गान्धिना तु 'सत्यमेव ईश्वरः' इत्युद्घोषितम्।

३. कटु अप्रियं च सत्यं कस्मैचिदपि न रोचते। सत्यवादी मानवोऽप्रियवादी मा भवतु इति सत्यं प्रियत्वेनात्र नियन्त्रितम्।

उपसंहारः—

सत्यं ब्रूयात्प्रियं ब्रूयान्मा ब्रूयात्सत्यमप्रियम्।

## मन एव मनुष्याणां कारणं बन्धमोक्षयोः

१. बन्धनमोक्षयोरनिवार्यता भाग्यमाश्रित्य प्रतिपादनीया यतो जङ्गमाः स्थावराश्च कर्मफलम् भोक्तुमेव संसारे आगताः।

२. कारणकार्ययोः समवायसम्बन्धोऽस्ति। अतः बन्धमोक्षयोः कारणं मन एव सिध्यति।

३. सर्वाणि इन्द्रियाणि मनसः साहाय्येनेव कर्मसु प्रवर्त्तन्ते। अतः सर्वेषां कुकृत्यानां निमित्तं मन एव। अतः सिध्यति यन्मन एव बन्धस्यापि कारणम्।

४. सुकृत्यानां फलं मोक्ष एव । मन एव सर्वाणि इन्द्रियाणि सुकृत्येषु प्रवर्त्तयति, अतः मनो मोहस्यापि कारणम् ।

५. मनसो वशीकरणेन एव मोक्षप्राप्तिर्भवति । अतो यत्नेन मनो वशे करणीयम् ।

उपसंहारः—अतो मोक्षप्राप्त्यर्थं मनसो निग्रहोपायः कर्त्तव्यः ।

**न महानिच्छति भूतिमन्यतः**

१. सर्वे भूतिकामाः खलु । अकिञ्चनास्तु प्रयत्नं विनैव भूतिं प्राप्तुमिच्छन्ति । महान्तस्तु स्वबाहुबलेनैव तामुपार्जयन्ति ।

२. विघ्नशतैः हन्यमाना अपि महान्तः स्वलक्ष्याद्विमुखा न भवन्ति । क्षुद्रास्तु भिक्षाचौर्यवञ्चनाप्रभृतिभिरवगुणैराक्रान्ताः सीदन्ति ।

३. पशुपक्षिणोऽपि स्वमहत्त्वं न त्यजन्ति । क्षुत्क्षामकण्ठोऽपि सिंहः शृगालादिभिर्जन्तुभिर्मारितं सत्वं न भक्षयति । जन्तूनां मध्येऽपि शृगालादयो नीचाः सन्ति ।

उपसंहारः—अतो महान्त एव मनुष्यपदमलंकुर्वन्ति ।

**यतो धर्मस्ततो जयः**

१. 'धारणाद्धर्म इत्याहुः' । इह संसारे यदपि दृष्टिपथमवतरति, तत्सर्वं तद्धर्मेणैव लक्ष्यते । सूर्यश्चन्द्रोऽश्चं स्वधर्ममालम्ब्यैव तिष्ठतः ।

२. धर्मस्य महिमा विवेचनीयाः—

**धर्म एव हतो हन्ति, धर्मो रक्षति रक्षितः,**
**तस्माद् धर्मो न हन्तव्यः, मा नो धर्मो हतो वधीत् ।**

३. रक्षितो धर्मो धार्मिकं रक्षति । विभीषणस्योदाहरणमत्र दातव्यम् ।

४. धर्मविमुखास्तु निधनं प्राप्नुवन्ति । रावणदुर्योधनहिरण्यकशिपुप्रभृतयोऽस्य निदर्शनानि सन्ति ।

उपसंहारः—

५. अधार्मिकानां वृद्धिर्न चिरस्थायिनो । तेषां ह्रासो निश्चितः । अन्ते धार्मिका एव जयन्ति ।

## सर्वे गुणा काञ्चनमाश्रयन्ते

१. काञ्चनशब्देनात्र धनमेवाभिप्रेतमस्ति ।
२. धर्मार्थकाममोक्षेषु धनस्यापि प्रमुखं स्थानमस्ति ।
३. सर्वे धनकांक्षिणः साफल्यार्थं यतन्ते ।
४. धनस्य हानयो लाभाश्च ।
५. सर्वे काञ्चनं किमर्थमभिलषन्ति । तस्य कारणमप्यन्वेषणीयम् ।
६. धनस्य निन्दायाः कारणमपि उल्लेखनीयम् ।
७. धनस्यानिवार्यता ।
उपसंहार :—
अतएव काञ्चनमेव सर्वसुखहेतुः ।

## विद्या ददाति विनयं, विनयाद् याति पात्रताम् ।
## पात्रत्वाद् धनमाप्नोति, धनाद् धर्मं ततः सुखम् ॥

१. विद्यायाः स्वरूपम् ।
२. विद्याया विनयादयो लाभाः ।
३. विद्या विनयं केन प्रकारेण ददाति ।
४. विनयेन पात्रता कथमायाति ।
५. पात्रत्वाद् धनं कथमाप्नोति ।
६. धनाद् धर्मः कथं प्राप्यते बुधैः ।
७. धार्मिको जनः सुखं कथं लभते ।
उपसंहारः—विद्या हि सर्वेषां सुखानां साधनम् ।

## आपदां तरणिर्धैर्यम्

[१] स्वभावत एव प्राणिनोऽधीराः खलु ।

[२] सर्वासां सिद्धीनां जनकं धैर्यम् । विपदि तु ये धैर्याद्विमुखा न भवन्ति ते वस्तुतो धीराः । समयप्रभावाद् धीरधुरन्धरो रामोऽपि विचलितधैर्योऽभवत् ।

[३] ये विधुरेऽपि काले विवेकं न त्यजन्ति ते एव धीराः । पाण्डवानामुदाहरणमप्यत्र दातव्यम् ।

उपसंहारः—

अतः सिद्ध्यति यद् धैर्येणैव सर्वाणि दुष्कराणि अपि कार्याणि सिद्ध्यन्ति । अतः आपदां तरणिर्धैर्यम् ।

## चातुर्वर्ण्यव्यवस्था

१. चातुर्वर्ण्यव्यवस्थाया विकासस्येतिहासः । चातुर्वर्ण्यव्यवस्थायाः आरम्भो वैदिककाले एवाभवत् । ऋग्वेदस्य पुरुषसूक्ते ब्रह्मणोऽस्य मुखमासीद्.........इति मन्त्रः ।

२. वैदिककाले चातुर्वर्ण्यव्यवस्था तादृशी कठोरा नासीत् यादृशी पुराणयुगेऽभवत् । तदा कर्मणा गुणेन च वर्णव्यवस्था स्वीकृता आसीत् । महाभारतेऽपि जातिविभागस्य मूलाधारो गुण एव । परं पुराणयुगे तु जातामूलं जन्म ।

३. जन्मनाऽङ्गीकृते वर्णभेदे नैतिकतायास्तस्मिन्युगे प्राधान्यमासीत् ।

४. वर्णव्यवस्थालाभाः ? वर्णव्यवस्थामङ्गीकृत्य आर्याः समाजस्य धर्मस्य च रक्षां कर्तुं क्षमाः ।

५. विविधाचारविचारसंस्कारप्रभृतिभिर्विभक्ता अप्यार्यजातिर्जातिदृष्ट्या अविभक्ता एव । गिलगिततः कन्याकुमारी यावत्सिन्धुप्रदेशः तत्रच कामरूपपर्यन्तं भारतीया अस्याः प्रभावेण एकस्मिन्नेव बन्धने सूत्रिता इति भिन्नतायामपि अभिन्नता वर्णव्यवस्थाया महान् लाभः ।

६. कलाक्षेत्रे चरमा प्रगतिरपि वर्णव्यवस्थाया महान् लाभः ।

७. वर्णव्यवस्थया आर्याणां धर्मः आदर्श सदाचारश्च अद्यावधि जीवति । रक्तस्य पवित्रताऽप्यनयैव सुरक्षिता ।

८. वर्णव्यवस्थाया हानयः-वर्णव्यवस्थया आर्याणां विकासोऽवरुद्धः । विदेशीयानां बहिष्कारेण तेषां प्रगतिरवरुद्धा ।

९. राष्ट्रियताया व्याघातोऽप्यभवत् । अस्पृश्यताया जनन्यपीयं वर्णव्यवस्था ।

उपसंहार :—

वर्णव्यवस्थायाः सृष्टिराध्यात्मिकतामाश्रित्यैव संजाता । अस्पृश्य-

तायास्तत्र नास्त्यवकाशः। अतो वर्णभेदहीनस्य समाजस्य स्थापनायै वर्णव्यवस्था एव सर्वथा उपयुक्ता।

**अहिंसा परमो धर्मः**

१. अहिंसायाः स्वरूपम्।

२. अहिंसायाः प्रकाराः [मनसा, वाचा, कर्मणा]।

३. अहिंसाया महत्त्वम् [अहिंसा परमो धर्मः]।

४. यदि क्वचिदहिंसा हानिप्रदा तदपि विवेचनीयम्। कुत्र कीदृशी अहिंसा उपयुक्ता इत्यस्मिन् प्रकरणे विवेचनीयम्। अहिंसा परमो धर्मः इति बौद्धानामादर्शमन्त्रः।

५. बलहीनस्याहिंसाया बलिष्ठस्य चाहिंसाया भेदोऽपि अत्र विवेचनीयः।

उपसंहार :—

**अस्मिन् विषये प्रमाणानि बाहुल्येन सर्वत्रोपलभ्यन्ते।**

**सन्मित्रम्**

१. सन्मित्रस्य किं लक्षणम्? ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति। भुङ्क्ते भोजयते चैव, षड्विधं मित्रलक्षणम्।

२. सन्मित्रस्य का आवश्यकता? केनामृतमिदं सृष्टं मित्रमित्यक्षरद्वयम्। आपदां च परित्राणं शोकसन्तापभेषजम्।

३. सन्मित्रस्य दुर्लभता।

४. के लाभाः सन्मित्रस्य [मित्रवान्साधयत्यार्थान्दुःसाध्यानपि वै यतः। तस्मान्मित्राणि कुर्वीत साधनान्येव चात्मनः]।

५. सन्मित्राभवे का हानयः।

उपसंहार—अतः सर्वथा सन्मित्रमन्वेषणीयम्।

**न हि सत्यात्परो धर्मः**

१. सत्यस्वरूपम्।

२. सत्यस्य विविधता [मनसा, वाचा, कर्मणा]।

३. सत्यस्य महिमा [सत्यमेव जयते नानृतम्]।

४. सत्यं ब्रूयात्प्रियं ब्रूयादित्यस्य विवेचनाऽपि अत्र कर्त्तव्या। यद्यपि सत्यं हानिप्रदं तदपि विवेचनीयम्। युधिष्ठिरस्यासत्यभाषणमपि अत्र विवेचनीयम्।

उपसंहारः—महाभारते प्रमाणानि बहूनि सन्ति।

**साम्प्रदायिक्यसहिष्णुता तत्प्रतीकारश्च**

१. भारतस्य पराधीनतायाः किं कारणम् [साम्प्रदायक्यिसहिष्णुता]।

२. यदा यदा भारते साम्प्रदायिक्यसहिष्णुता उग्राऽभवत् तदा तदा भारतोऽवनतिगर्तेऽपतत्।

३. साम्प्रदायिक्यसहिष्णुता यदा तिरोहिता सदा चरमा प्रगतिः भारतेन कृता। अशोकस्य साम्राज्यमस्य निदर्शनम्।

४. स्वतन्त्रता प्राप्त्यनन्तरं इयं कुप्रवृत्तिः पुनर्वर्धमाना दृश्यते राष्ट्रियताया भावनामियं कुण्ठयति। राष्ट्रियताया अभावे न कोऽपि देशः प्रगतिं कर्त्तुं प्रभवति। अतः सर्वथा शमनीया इयं कुप्रवृत्तिः।

५. साम्प्रदायिक्यसहिष्णुतायाः प्रतीकारस्तु राष्ट्रियता एव। भारतीयसंस्कृत्याः सर्वोत्कृष्टा विशेषता धार्मिकसहिष्णुता आस्ते। तस्या उद्बोधनेनैव अस्याः प्रतीकारः सम्भवः।

**वृत्तं यत्नेन संरक्षेत्, वित्तमेति च याति च**

१. संसारे बहुमूल्यं वस्तु वृत्तमेवास्ति।

२. वृत्तस्य रक्षा सर्वतः कार्या।

३. वृत्तस्य रक्षक एव संसारे वास्तविकीं प्रगतिं कर्त्तुं प्रभवति।

४. धनं तु चञ्चलमतस्तस्य रक्षया न कोऽपि लाभः।

५. वृत्तस्य रक्षा उदात्तविचारैरेव भवति।

उपसंहार :—अतः सुष्ठु आह कश्चिन्नीतिविशारद :—

'वृत्तं यत्नेन संरक्षेत्, वित्तमेति च याति च।

**गुणाः पूजास्थानं गुणिषु न च लिंगं न च वयः**

१. पूजाया अभिलाषः प्राणिमात्रे वर्तते। गुणा एव पूजास्थानम्। गुणिनं दैवतं मन्यमानाः सर्वे तं पूजयन्ति।

२. गुणेषु पुरुषेण यत्नः कार्यः। गुणैः सर्वं प्राप्तुं शक्यते।

३. केवलं लिङ्गमपि पूजाया निमित्तं न भवति। गुणहीनो रावणः स्वबन्धुभिरपि त्यक्तः। गुणाढ्यो रामः परपक्षपुरुषैरपि सेवितः। अतएव गुणाः एवकान्ततः पूजायाः स्थानम्।

४. वयोऽपि पूजायाः कारणं न भवति। न धर्मवृद्धेषु वयः समीक्ष्यते।

उपसंहार :—गुणिनः एव शाश्वतीं पूजामधिगच्छन्ति। अतो गुणोपार्जने एव सर्वथाऽध्यवसायः कार्यः।

## वैदिकसंस्कृतिः

१. संस्कृतेः परिभाषा।

२. आध्यात्मिकविचारधारा वैदिकसंस्कृत्याः प्रमुखा विशेषता।

३. प्राचीनत्वदृष्टयाऽपि वैदिकसंस्कृतिर्महत्त्वपूर्णा खलु। इयं तावत्संसारस्य प्राचीनतमसंस्कृतिष्वेकतमा विद्यते।

४. वैदिकसंस्कृत्या एव प्रभावो यद्भारतीयाः संकुचितमानसा नाभवन्।

५. वैदिकसंस्कृत्या अपरा विशेषता सहिष्णुता खलु।

६. भारतीयसामाजिकव्यवस्थाऽपि वेदेभ्य एव प्रादुर्भूता।

७. वैदिकसंस्कृत्याः प्राक्कालादेवाक्षुण्णोऽपरिमितश्च प्रभावोऽस्माकं जीवनेऽवलोक्यते। भारतीयं वाङ्मयं भारतीया संस्कृतिश्च वैदिक संस्कृत्या पूर्णतयाऽनुप्राणिते स्तः।

उपसंहार :—आभिरेव विशेषताभिर्वैदिकसंस्कृतिरद्यापि श्वसिति, अप्रतिहतया च प्राणशक्त्या पूरिता जगतां संस्कृतीनां समक्षं महत्त्वपूर्णं स्थानं भजते।

# Glossary

## शब्दकोषः

पु० = पुलिङ्ग
न० = नपुंसकलिङ्ग
स्त्री = स्त्रीलिङ्ग
वि० = विशेषण

अं

अकल = बुद्धिः (स्त्रीं०)
अंकुश = अंकुश (पु० न०)
अखाड़ा = अक्षवाटः (पु०)
अखवार = समाचारपत्रम् (न०)
अखरोट = अक्षोटः (पु०) अक्षोट कम (न०)
अंगड़ाई = जृम्भणं, जृम्भा, जृम्भिका (स्त्री०)
अगत्राण = अगत्राणम् (न०)
अंगविक्षेप - अंगविक्षेप (पु०)
अंगार = अङ्गार (पु० न०)
अंगिया = कचुक (पु०)
अंगीठी = अङ्गार धानिका, अङ्गार धानी, अङ्गारपत्री, अङ्गारशक्टी
अंगुली = अंगुली (स्त्री)
अंगूठा = अंगुष्ठ (पु०)
अनल = अनल (पु०)
अनवधान = अनवधाथ (वि०)
अनवरत = अनवरत (वि०)
अंगूठी = अगूलीयम्
अंगूर = द्राक्षा (स्त्री०)
अदूरदर्शिता = अदूरदृष्टिः (स्त्री०)
अपरिणामदृष्टः (स्त्री०)
अदूरदर्शी = अदीर्घदर्शी-शिनो-शि (न)
अदूरदर्शी, अपूर्वदृष्टिः (वि०)
अद्रक = आर्द्रकम् (न०)
अद्यापि = अद्यापि (अ०)
अद्यावधि = अद्यावधि (अ०)
अधारिवला = अर्धसंवृत (वि०)
अर्धमुकुलित (वि०)
अर्धनिमिलित (वि०)
अंधाधुन्ध = मृशम् (क्रि० वि०) नितान्तम् (क्रि० वि०)
अध्यावसाय = अध्यावसाय (पु०)
अनर्घ = अनर्घ (वि०)
अनर्थक = अनर्थक (वि०)
अचार = आसुनत् (न०)
अच्छी तरह = सम्यक् (अ०)
अनार = दाडिम (न०)

अनवसर = अनवसर (वि०)
अनशन = उपवासः (पु०)
अनशनम् (न०) अहारः (पु०,
अभोजनम् (न०)
अनसुना = अश्रुतः (वि०) अनाकर्णितः (वि०)
अनाज = धान्यं (न०) धान्यादि (न०)
अनामय = अनामय (वि०)
अनिर्वचनीय = अनिर्वचनीय (वि०)
अलबत्ता = असन्दिग्ध (वि०)
अश्मयः (वि०)
अलमस्त = मत्तः (पु०) उन्मत्तः (पु०)
अलमारी = भित्तिबहिःस्थःफलकः(पु०)
भित्तिवहिःस्थं दीर्घकाष्ठम् (न०)
अस्पताल = चिकित्साशाला (स्त्री०
आरोग्यशाला (स्त्री०)
अहाता = आवेष्टकः (पु०)
अहीर = आभरिः (पु०)
अफसर = पदाधिकारी (पु०)
अंगोछा = अङ्गमार्जनम्
अंचल = वस्त्राञ्चलः, वस्त्रान्तः (पु०)
अजायबघर = संग्राहलयः (पु०)
अटकलपच्चू = काल्पनिक (वि०)
अठखेली = सविलासत्वम् (न०)
क्रीडाशीलता (स्त्री०)
अटल = अचल (वि०)
अतिशीघ्र = द्राक्, झटिति
अत्याचार = अत्याचारः (पु०)
अथाह = अगाध (वि०)
अदल-बदल = परिवर्तन (न०)
परिवृत्तः (स्त्री०)
अब = अधुना
अभी = साम्प्रतमेव
अमानत = न्यासः (पु०)
अम्मा = माता, अम्बा (स्त्री०)
अम्ल = अम्ल (वि०)
अरल = अगलम (न०)
अरसा = अवधि (स्त्री०)
अराजक = अराजक (वि०)
अर्जी = प्रार्थनापत्रम् (न०)
अर्जीनवीस = प्रार्थनापत्रलेखकः (पु०)

**आ**

आँखो का कोना = अपाङ्ग (पु०)
आँख की पुतली = कनीनिका (स्त्री)
आँगन = प्राङ्गणम् (न०)
आँचल = अञ्चल (पु०)
आम का वृक्ष = आम्रः (पु०)
आमलः = आमलकम् (न०)
आरा = क्रकच (पु०)
आलू = आलुकम् (पु०)
आय = आयः (पु०)

आँधी = प्रभञ्जनः (पु०)
झंझानतम् (न०)
आज का = अद्यतनम्
आटा = चूर्णम् (न०)
आटा गेहूं का = समिता (स्त्री०)
आदत = स्वभावः (पु०) प्रकृति (स्त्री)
आमदनी = आय (पु०)
आमला = आमलकम् (न०)
आयु = आयुः (न०)
आरा = क्रकचः (पु०)
आर्डर = आदेशः (पु०)
आलसी = अलसः (पु०)
आलू = आलुकम् (न०)
आवारा = यायावरः, लम्पटः (पु०)
आवारागर्दी = यायावरत्वम् (न०)
आधी रात = निशीथः (पु०)
(स्त्री०) अर्धरात्रिः (स्त्री०)
आम्र = आम्रफलम्
आम्रम् (न०)

ऊ

ऊंचा = उच्च, उच्चैः
ऊंचा नीचा = विषमः (वि०)

ए

एकदम = अकस्मात्
एक साथ = युगपद्
एकाएक = सहसा
एक्कागाड़ी = एकाश्वयानम् (न०)

इ

इकलौता = एकलः (वि०)
इनाम = पुरस्कारः (न०)
पारितोषिकम् (न०)
इन्स्पैक्टर = निरीक्षकः (पु०)
इन्स्पैक्शक = निरीक्षणम् (न०)
इमली = अम्लिका (स्त्री०)
तिन्तिडीकम् (न०)
इरादा = निश्चयः (पु०)
इलायची = एला (स्त्री०)

ई

ईंट = इष्टिका (स्त्री०)
ईमानदारी = आर्जवम् (न०)
ऋजुता (स्त्री०)

उ

रजनी उत्सुकता = औत्सुक्यम् (न०)
उत्कण्ठा (स्त्री)
उधार = ऋणम् (न०)
उस्तरा = क्षुरः (पु०)
कड़ा = कटकः (पु०)
कढ़ाई = स्वेदनी (स्त्री०)
कढ़ी = क्वथिता (स्त्री०)
कत्था = खादिरम् (न०)
कनखी = कटाक्ष (पु०)
कनपटी = गण्डः (पु०)
कमखर्च = मितव्ययी (वि०)
कमरा = प्रकोष्ठः (पु०)

एडिटर = सम्पादकः (पु०)
एड़ी = पार्ष्णिः (पु०, स्त्री०)
ऐनक = उपनेत्रम् (न०)

**ओ**

ओंठ = ओष्ठः (पु०)
ओखली = उलूखलम् (न०)
ओला = वर्षोपलः (पु०) करका (स्त्री०)

**क**

कंगन = कङ्कणः (पु०, न०)
कंघा = कंकतिक, प्रसाधनी (स्त्री०)
कवल = कम्बलः (पु०)
ककड़ी = कर्कटी (स्त्री०)
कटोरा = कसः
कटोरी = कसी, मल्लिका (स्त्री०)
कडछी = दर्वी स्त्री०)
कुण्डल = कुण्डलम् (न०)
कुदाली = खनित्रम् (न०)
कुबड़ा = कुब्जः, न्युब्जः (वि०)
कुरता = कञ्चुकः (पु०)
कुरसी = वेत्रासनम् (न०)
कुली = भारवाहकः (पु०)
कुल्ला = गण्डूषः (पु०)
कल्हाड़ा = कठारम् (न०)
कड़ा = अवकरः (पु०)
केला = कदलीफलम् (न०)
केसर = कङ्कमम् (न०)
कैंची = कर्त्तरी (स्त्री०)
कर्जदार = ऋणी (पु०)
अधमर्णः (पु०)
कल = ह्यः (बीता हुआ) श्वः (आने वाला)
कलई = सुधा (स्त्री०)
कलछी = दर्वी (स्त्री०)
कवच = कवचः (पु०)
कस्तूरी = कस्तूरी (स्त्री०)
मृगमदः (पु०)
कांजी = काञ्जिकम् (न०)
काठी = पर्याणम् (न०)
कानून = विधानम् (न०)
किराया = भाटकः (पु०)
किवाड़ = कपाटः (पु०)
किसमिस = द्राक्षा (स्त्री०)
कील = कीलकम् (पु०, न०)
खाज = कण्डूः (पु०) कण्डूया (स्त्री०)
खान = खनि (स्त्री०), आकारः (पु०)
खिचड़ी = कृसरान्नम् (न०)
खिड़की = वातायनम् (न०
खीर = क्षीरोदनम् पायसम् (न०)
खीरा = त्रपुसम् (न०)
खुर = खुरः (पु०) शफम् (न०)
खुरपा = क्षुरप्रः (न०)
खुशामद = अनुवर्तनम् (न०)
खूंटी = नागदन्तः (पु०)
खून = रक्तम् (न०) शोणित (न०)
खेल = क्रीडा (स्त्री०)

कैंचुली = कञ्चुकः (पु०)
कैमिस्ट्री = रसायनशास्त्रम् (न०)
कोतवाल = कोट्टपालः (पु०)
कोस = क्रोशः (पु०)
कौंच = पल्यङ्कः (पु०)
कौड़ी = वराटिका (स्त्री०)

**ख**

खच्चर = अम्वतरः (पु०)
खजूर = खर्जूरम् (न०)
खटमल = मत्कुणः (पु०)
खरबूजा = खरबूजः (पु०)
खलिहान = खलः (पु०, न०)
खोता = कुलायः (पु०) नीडः (पु०)
खोआ = कूर्चिका (स्त्री०)
खोटापन = क्षुद्रता (स्त्री०)

**ग**

गठबन्धन = ग्रन्थिबन्धनम् (न०)
गड़बड़ = अव्यवस्था (स्त्री०)
गड़रिया = मेषपाल (पु०)
गड्ढा = गर्तः (पु०)
गमखोर = दुःखसहिष्णुः (पु०)
गलत = अशुद्धम् (वि०)
गली = प्रतोलिका (स्त्री०)
गलीचा = कम्बोजास्तरणम् (न०)
गाड़ी = यानम् (न०) गन्त्री स्त्री०)
गालीगलौच = अपशब्दः (पु०)
गुन्जाइश = अवकाशस्थानम् (न०)
गुच्छा = गुच्छकः (पु०)
गुलाव = पाटलम् (न०)
गेंद = कन्दुकः, गेन्दुकः (पु०)
गेरु = गैरिकम् (न०)
गेहूँ = गोधूमः (पु०)
गोद = अङ्कः (पु०) क्रोडः (पु० न०)
गोल = वृत्ताकारः, वर्तुलः (वि०)

**घ**

घड़ियाल = नक्रः (पु०)
घना = घनम् (वि०) घनिष्ठः वि०)
घरबारी = गृहस्थः (पु०)
घामः – धर्मः (पु०)
घास = तृणम् (न०)

**च**

नाताः = चंदोववि (पु०, न०)
चकला = चक्रलम् (न०)
चक्की = पेषणी (स्त्री०)
चटनी = अवलेह (पु०)
चटाई = कटः (पु०)
चना = चणकः (पु०)
चपरासी = प्रतिहारः (पु०)
चमार = चर्मकारः (पु०)
चम्मच = चमसः (पु०)
चरबी = वसा (स्त्री०)
चश्मा = उपसेत्रम् (न०)
चांदनी = १. चन्द्रिका (स्त्री०)
२. प्रच्छदपटः (पु०)
चांदी = रजतम् (न०)
चाक = कठिनी (स्त्री०)

घुटना = जानु (न०)
घुड़सवार = अश्वारोही (पु०)
घुड़साल = अश्वशाला, मंदुरा (स्त्री०)
घूंघट = अवगुण्ठनम् (न०)
घूंस = उत्कोच: (पु०) उपदा (स्त्री०)
कुलाय: (पु०)

चाकू = लवित्रम् (न०)
चादर = प्रच्छदपट: (पु०)
चापलूसी = चाटुकारिता (स्त्री०)
चाबुक = कशा (स्त्री०)
चारपाई = चतुष्पादिका (स्त्री०)
चिंघाड़ = बृंहितम्, करिगर्जितम् (न०)

इति शुभम्

